6.4

ॐ

संस्कृतहिन्दीटीकाद्वयोपेता

# वेदस्तुतिः



आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥

व्याख्याता

श्रीराममूर्तिशास्त्री पौराणिकः

श्रीमद्भागवतदशमस्कन्धसप्ताशीतितमाध्यायगता

# वेदस्तुतिः

काशीस्थ-श्रीगोयनकासंस्कृत-महाविद्यालय-पुराणशास्त्राध्यापकेन
पौराणिकसार्वभौमपण्डितप्रवरश्रीनारायणदत्तमिश्रचरणान्ते-
वासिना श्रीराममूर्तिशास्त्रिपौराणिकेन विरचितया
भक्तरञ्जन्याख्यया संस्कृतटीकया भाषाटीकया च

समलङ्कृता

सेयं

वाराणसेयराजकीयसंस्कृतमहाविद्यालयप्राध्यापकपदमलङ्कुर्वाणैः
प्राच्यावाच्यबाह्याबाह्यसकलदर्शनादिसंस्कृतवाङ्मयपारावारीणैः
पण्डितप्रवरश्रीरघुनाथशास्त्रिभिः

समीक्षिता


| प्रथमावृत्तिः १००० | संवत् २०१० | उपहारः सपादमुद्राद्वयम् २।) |
|---|---|---|

# प्रस्तावना

इह खलु त्रिगुणात्मके जगति नानाक्लेशोपसर्गबाधितानां जीवानां तद्विरमाय ब्रह्मसूत्रं सप्तदशपुराणानि चाविर्भाव्यापि चित्ततोषमनुपलभमानः श्रीवेदव्यासो भगवान् नारदोपदेशेन भगवल्लीलावर्णनप्रधानमादितो यावदन्तं ज्ञानवैराग्यभक्त्यादिभिरोतप्रोतं झटिति श्रीकृष्णरुच्युत्पादकं सर्वपुराणमूर्धन्यं श्रीमद्भागवतं नाम महापुराणमाविर्भावयामासेति न परोक्षं प्रेक्षावतां । तत्रापि दशमस्कन्धगते सप्ताशीतितमाध्याये सर्वोपनिषदादिसारभूतं मञ्जुलमप्यतीवगम्भीरं वेदस्तुतिनामकं प्रकरणं विद्यते । तत्र सम्पूर्णाध्याये एकपञ्चाशत्संख्याकाः श्लोकाः सन्ति । तेषु पञ्चदशादारभ्य द्वाचत्वारिंशपर्यन्ता अष्टाविंशतिः श्लोका एव वेदस्तुति-नामतः प्रख्याता नर्कुटकच्छन्दसा प्रकल्पिता दृश्यन्ते ।

तत्र प्रथमपद्येन भगवतः श्रीकृष्णस्य स्वरूपलक्षणमुक्तम्, द्वितीयेन अभेदोपासना, तृतीयेन भक्त्युत्कर्षः, चतुर्थेन सेवोपदेशः, पञ्चमेन योगमार्गप्रदर्शनम्, षष्ठेन भगवतः सर्वभूतान्तर्यामिस्वरूपनिरूपणम्, सप्तमेन अंशांशिभावप्रदर्शनम्, अष्टमेन भगवच्चरितमहिमा, नवमेन अभक्तदुर्गतिः, दशमेन गोपीभावप्रार्थना, एकादशेन भगवतो वाङ्मनसा-गोचरत्वम्, द्वादशेन पञ्चवादिमतखण्डनद्वारा अद्वैतमतप्रतिपादनम्, त्रयोदशेन सृष्टेः सत्यासत्यत्वोपवर्णनम्, चतुर्दशेन अभक्तदार्शनिकबन्धः, पञ्चदशेन भगवतः सर्वेश्वरत्वम्, षोडशेन जीवसृष्टौ भगवतः समत्वम्, सप्तदशेन तार्किकमतखण्डनम्, अष्टादशेन भगवतः श्रीकृष्णस्य सर्वजगल्लयाधिष्ठानत्वम्, एकोनविंशेन वैपरीत्ये भयप्रदर्शनपूर्वकं भगवत्यनुरागः, विंशेन गुरुभक्त्युपदेशः, एकविंशेन वैराग्योपदेशः, द्वाविंशेन तीर्थसेवनोपदेशः, त्रयोविंशेन जगत्सत्यत्वखण्डनम्, चतुर्विंशेन जगन्मिथ्यात्वसमर्थनम्, पञ्चविंशेन जीवेश्वरवैलक्षण्यम्, षड्विंशेन दाम्भिकसंन्यासिनिन्दा, सप्तविंशेन भक्तानां लोकद्वयेऽपि दुःखाभावः, अष्टाविंशेन भगवतः तत्सुखस्य चानन्त्यं दर्शयन्त्यः श्रुतयो निर्गुणे ब्रह्मणि कथं चरन्तीति प्रश्नोपक्रमस्य 'त्वयि हि फलन्ति' इत्युपसंहारवाक्येन समाधानं च कुर्वत्यः स्तवप्रकर्षेण आविर्भूते कन्दर्पकोटिलावण्ये श्रीकृष्ण-एव ताः संश्लिष्टा बभूवुरित्येवं संक्षिप्य वेदस्तुतिविषयो दर्शितः ।

सेयं वेदस्तुतिर्वेदान्तार्थजिज्ञासून् भक्तिजिज्ञासूंश्चातीवोपकरिष्यतीति

दृढं विश्वसिमि। अत्र तत्तत्सम्प्रदायाचार्यैः श्रीश्रीधरस्वामिभिः श्रीजीवगोस्वामिभिः श्रीविश्वनाथचक्रवर्तिभिः श्रीविजयध्वजादिभिश्च स्वस्वसम्प्रदायानुकूल्येन कृता अतीव हृद्या बह्व्यो व्याख्या उपलभ्यन्ते। महाराष्ट्रपण्डितप्रवरेण श्रीवामनेनाप्यत्र श्रुतिकल्पलतानाम्नी अतीव विस्तृता व्याख्या कृता। किन्तु ताः सर्वा अपि सुकुमारधियामतीवदुरूहाः क्लिष्टतमाश्चेति मत्वा लोकाग्रहतश्च अत्र सर्वसाधारणोपयोगिनी अतीवसरला भक्तरञ्जनीनाम्नी संस्कृतव्याख्या हिन्दीव्याख्या च कृता। अत्र प्रदर्शितपरिपाट्या मन्दमतयोऽपि झटिति श्रुतिरसास्वादने पूर्णतया क्षमा एवेत्यस्या वैशिष्ट्यम्।

अत्र सर्वप्रथमं श्लोकावतरणिका, तामनु मूलश्लोकः, ततः संक्षिप्तसार्थान्वयः, ततो विस्तृतव्याख्या, ततः सरससरलश्लोकेन मूलपद्यस्य पद्यानुवादः, ततो हिन्दीव्याख्या, इत्येवं व्याख्याप्रकरपरिवृता साम्प्रतं विद्योतते दुरवगाहापि वेदस्तुतिः।

अस्या उत्थानबीजं तु पूर्वाध्यायान्ते "उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात्" इति पद्यमेव, तत्र पूर्वैः सन्मार्गमित्यस्य व्याख्यानं सतां वेदानां मार्गं ब्रह्मपरत्वमित्युक्तम्, तत्र परीक्षिदाशङ्का वेदास्त्रैगुण्यविषयाः ब्रह्म तु निर्गुणमतो वेदानां ब्रह्मप्रतिपादनपरत्वं कथमिति। व्याख्यान्तरे तु शङ्कोत्थानमेव न स्यादतः स्वाम्यर्थ एव समीचीनः। शङ्काया यत्समाधानं तदप्यत्र सर्वथोचितमेव, निर्गुणनिष्क्रियादिशब्दानां तु वेदान्तिनामिव न भागवतैः गुणक्रियादिशून्यत्वमर्थो निश्चीयते किन्तु प्राकृतगुणक्रियादिराहित्यमेव निर्गुणत्वं निष्क्रियत्वं च, दृश्यते च तथैवात्र 'हरिर्हि निर्गुणः साक्षादीश्वरः प्रकृतेः परः' 'तत्कर्म दिव्यमिव' इत्यादि तदुद्दिश्यैव समाधानस्यौचित्यम्। अतोऽत्राद्वैतसिद्धान्तं दर्शयतापि तस्य पर्यवसानमद्वैतादपि सुन्दरे दिव्यगुणे श्रीभगवत्येवेति सर्वमनवद्यम्, दृश्यते चाद्वैतानन्दं विहाय श्रीशुकसनकादीनामत्रैवाकर्षणम् 'परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया। गृहीतचेताः'—'तस्यारविन्दनयनस्य पदारविन्दकिञ्जल्कमिश्रतुलसीमकरन्दवायुः। अन्तर्गतः स्वविवरेण चकार तेषां संक्षोभमक्षरजुषामपि चित्ततन्वोः॥ इत्याद्युक्तेः। उचितं चैतत् न सितारूपिणां किञ्चिदानन्दोऽपि तु सितास्वादिनामेवेति अत्र बहु वक्तव्यमस्ति किन्तु विस्तरभिया विरमामि।

वै० संवत् २०१० अक्षय तृतीया } श्रीराममूर्तिशास्त्री पौराणिकः

❀ श्रीवृन्दावनविहारिणे नमः ❀

# वेदस्तुतिः

## भक्तरञ्जनीव्याख्यया हिन्दीव्याख्यया च

## विभूषिता

भक्तरञ्जनी

वन्दे वृन्दावनं धाम वृन्दावननदोद्भवम् ।
वृन्दावनलतागुल्मान् वृन्दावनभुवो रजः ॥ १ ॥
वृन्दावनभवाञ्जीवान् वृन्दावनजगोपिकाः ।
वृन्दावनेश्वरीश्लिष्टं वृन्दावनविहारिणम् ॥ २ ॥
श्रीमद्भागवतं नौमि सच्चिदानन्दविग्रहम् ।
श्रद्धया सेवनाद्यस्य भुक्तिमुक्ती न दुर्लभे ॥ ३ ॥
जीवोद्धारनिमित्तमानुषमिदं लब्ध्वापि सांसारिके
गर्ते सम्पततां नृणां हृदि हरेर्भक्तेः सुधामाधुरीम् ।
आकृष्यादधतीं जगन्निरसनीं सिद्धान्तभूतां परा-
माम्नायोपनिषत्पुराणरसजां वेदस्तुतिं प्रस्तुते ॥ ४ ॥
प्रागाचार्यपरम्परामनुसरंष्टीकानुटीकाः पठन्
मध्येचित्तमहर्निशं भगवतः पादाम्बुजं संस्मरन् ।
श्रीमद्भागवतामृतं कृतिजनान् सम्पाययन्वा पिबन्
कुर्वेऽहं सरलां श्रुतिस्तुतिमितव्याख्यां मनोहारिणीम् ॥ ५ ॥
व्याख्याः कृता बुधवरैर्विविधास्तथापि
सन्तोषदा न सुकुमारधियामशेषाः ।
इत्थं विमृश्य गुरुवर्य्यपदाब्जभक्त्या
व्याख्या नितान्तसरला क्रियते मयापि ॥ ६ ॥
मतिबलं विमलं क्व नु मय्यलं क्व गहनः श्रुतिदुर्गमहाम्बुधिः ।
तदपि तं वृषभानुसुतापदस्मृतितरिश्रयणेन तितीर्षति ॥ ७ ॥
भक्तेशयोः पदासीनं भक्तेशाभीष्टदायकम् ।
आञ्जनेयं महावीरं नौमि सङ्कटमोचनम् ॥ ८ ॥

## परीक्षिदुवाच

ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ।
कथं चरन्ति श्रुतयः साक्षात्सदसतः परे ॥ १ ॥

### भक्तरञ्जनी

हे ब्रह्मन् ! वेदतात्पर्यज्ञ ! निर्गुणे ब्रह्मणि गुणवृत्तयः श्रुतयः त्रैगुण्य-विषयका वेदाः साक्षात् प्रतिपादकत्वेन कथं चरन्ति कथं प्रवर्तन्ते इति मे संशयं छिन्धीति वाक्यशेषः । कथम्भूते ब्रह्मणि । अनिर्देश्ये इदन्तया निर्देष्टुमशक्ये । 'यत्तदद्दश्यम्' इति श्रुतेः । पुनश्च सदसतः स्थूलसूक्ष्म-रूपात् कार्यकारणरूपाद्वा प्रधानात्परेऽसङ्गे । 'अस्थूलमनणु' इति श्रुतेः । अत्र अनिर्देश्यत्वे निर्गुणत्वं हेतुः निर्गुणत्वे च सदसतः परत्वं हेतुः । गुणेषु सत्त्वादिषु तत्कार्येषु वा वृत्तिः प्रवृत्तिर्यासां ताः गुणवृत्तयः । अत्रेदमवधेयम्—पूर्वाध्यायान्ते सतां वेदानां मार्गं ब्रह्मप्रतिपादनपरत्व-मादिश्य भगवानगादित्युक्तं तत्र श्रुतीनां शब्दात्मकत्वात् शब्दानां च मुख्यालक्षणागौणीभेदेन त्रैवृत्तिकत्वात् मुख्याया अपि रूढ्योग-भेदेन द्वैविध्याच्च रूढिः स्वरूपेण जात्या गुणेन वा निर्देशयोग्ये वस्तुनि डित्थः, गौः, शुक्लः इत्यत्र क्रमेण शब्दार्थयोः सङ्केतेन प्रवर्तते । ब्रह्मणि चाकारजातिगुणाभावान्न रूढ्या श्रुतीनां तत्र प्रवृत्तिः । योगवृत्तिश्च प्रकृतिप्रत्ययार्थयोर्योगेन पाचक इत्यादौ प्रवर्तते । लक्षणा च गङ्गायां घोष इत्यादौ मुख्यार्थबाधे गौणार्थकल्पनमितिलक्षणात् सम्बन्धिविषयत्वेन तीरे प्रवर्तते । ब्रह्मणश्च सदसतः परत्वेनासङ्गत्वान्न तयोरपि तत्र प्रवृत्तिः । गौणी च सिंहे वर्तमानक्रौर्यादिगुणानां माणवके दृश्यमानत्वात् सिंहो माणवक इत्यत्र प्रवर्तते । ब्रह्मणि च कस्यापि धर्मस्यासत्त्वान्न गौण्या अपि तत्र प्रवृत्तिः । एवञ्च सर्ववृत्त्यतीते निर्गुणे ब्रह्मणि गुणवृत्तयः श्रुतयः कथं चरन्तीति राज्ञः प्रश्नावसर इति संक्षेपः ॥ १ ॥

### भाषार्थ

राजा परीक्षित् बोले कि हे ब्रह्मन् ! जिसका अँगुलीसे निर्देश नहीं किया जा सकता और जो सत्-असत् कार्य-कारण-रूप प्रकृतिसे परे है उस निर्गुण ब्रह्ममें गुणोंका प्रतिपादन करनेवाली श्रुतियाँ किस प्रकार उसके निरूपणके लिये साक्षात् प्रवृत्त होती हैं मेरे इस संशयको आप दूर कीजिये ॥ १ ॥

## श्रीशुक उवाच

बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः ।
मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥ २ ॥

### भक्तरञ्जनी

उत्तरमाह—बुद्धीति । प्रभुः जनानां जीवानां मात्राद्यर्थं क्रमेण अर्थ-धर्मकाममोक्षार्थं तत्साधनभूतान् बुद्ध्यादीन् असृजत् इत्यन्वयः । बुद्धिं मात्रार्थम् अर्थार्थम्, इन्द्रियाणि भवार्थं धर्मकर्मकरणार्थं, मन आत्मने आत्मलोकभोगार्थं, प्राणम् अकल्पनाय मोक्षार्थं चासृजत् । यद्वा । बुद्ध्यादियुक्तान् देहान् असृजत् । नन्विदमुत्तरमपि अयुक्तमिव प्रतिभाति क्व गच्छसीति प्रश्ने मया क्षीरान्नं भुक्तमिति वदिति चेन्न । उत्तरस्य अत्रैव गर्भितत्वात् । तथाहि प्रकर्षेण सगुणत्वेन भवति आविर्भवतीति प्रभुः सच्चिदानन्दविग्रहः सन् भगवानसृजत् । एवं योऽसृजत् तमेव श्रुतयः प्रतिपादयन्ति तात्पर्यवृत्त्या च निर्गुणमपि । वस्तुतस्तु इदमपि नोचितं मुख्यया वृत्त्या इत्येव वक्तव्यं यतः प्राकृतगुणरहितः निर्गुणः भगवान् श्रीकृष्ण एव अकारो वासुदेवस्तेन निर्देश्यश्च सदसतः प्रकृतेः परश्च तत्रैव श्रुतयः साक्षाच्चरन्तीति प्रश्नोत्तरयोः पूर्णा सङ्गतिः । यथोक्तमत्रैव 'हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः' एवं सति प्राकृतबालवत् अप्राकृतबालमुकुन्दस्यापि चिक्रीडिषा सम्भवति सा च स्वांशभूतजीवद्वारैव सम्पत्स्यते अतो जनानामित्युक्तम् । किञ्च 'असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते' इत्युक्तेर्नहि विरुद्धसृष्टिं विना जीवानां वास्तविकब्रह्मरसोपलब्धिः रात्रिं विना दिनस्येव अतो मात्रार्थमित्युक्तम् । मीयन्ते बुद्ध्या ज्ञायन्ते इति मात्राः अर्थाः तदर्थम् । ताश्च कर्मानुष्ठानं विना न स्युः अतः भवार्थमित्युक्तम् । इन्द्रियैर्भवतीति भवः कर्म तदर्थम् । चकारौ मात्रा-भवयोः परस्परं सम्बन्धं द्योतयतः । ततश्च कर्मफलभोगाय मनसा सह तत्र तत्र लोकेषु अतति सातत्येन गच्छतीति तदर्थम् आत्मार्थम् आत्म-भोगार्थम् । एतेन कामभोगो दर्शितः । ततश्च प्राणोपासनया ईशभक्त्यैव ज्ञानवैराग्योदयेन भोगवैरस्यात् कल्पना माया तन्निवृत्तिसत्त्वान्मोक्षश्च घटते इत्यतोऽकल्पनायेत्युक्तम् । एवं चतुर्वर्गार्थमसृजदिति संक्षेपः । च आत्मने इत्यत्र सन्ध्यभावो हि ऐहिक पारलौकिक विषयेषु सन्धिनं कार्यं

उक्तार्थमेव द्रढयितुं समाहात्म्यमितिहासमवतारयति—सैषेत्यादिनवभिः।

सैषा ह्युपनिद्ब्राह्मी पूर्वेषां पूर्वजैर्धृता।
श्रद्धया धारयेद्यस्तां क्षेमं गच्छेदकिञ्चनः॥ ३॥

भक्तरञ्जनी

इति सूचनार्थम्। अग्रे सन्धिना च मोक्षे कार्यं इत्यपि सूचितम्। यद्वा 'अध्यारोपापवादाभ्यां निष्प्रपञ्चः प्रपञ्च्यते'। इत्युक्तेर्नहि अध्यारोपं विना अपवादः सम्भवतीति उपाधिनिषेधद्वारैव श्रुतयो ब्रह्मणि चरन्तीत्युपाधिनिषेधार्थमेव बुद्ध्याद्युपाधीनसृजदित्युत्तरसङ्गतिः। केचित्तु कल्पनाय वासनायुक्ताय आत्मने जीवाय मात्रार्थं विषयार्थं भवार्थं कल्याणार्थं च तद्भोगमोक्षसिध्यर्थमित्यर्थः। चकारद्वयं भोगमोक्षसाधनभूतौ अनुक्तौ अर्थधर्मौ समुच्चिनोतीत्याहुः॥ २॥

या नारायणबुद्धिस्था सा एषा प्रश्नोत्तररूपा। यद्वा सा प्रसिद्धा एषा जय जयेत्यादिवक्ष्यमाणा। ब्राह्मी वेदसंबन्धिनी उपनिषद् रहस्यविद्या। उप श्रीकृष्णसमीपं नि निश्चयेन सादयति प्रापयतीति तथाभूता। पूर्वेषां नारदादीनां पूर्वजैः सनकादिभिर्ब्रह्मादिभिर्वा धृता स्वान्तःकरणेषु। हि यस्मात् तस्मात् यस्तां श्रद्धया श्रवणादिना धारयेत् सोऽकिञ्चनः देहाद्युपाधिशून्यः सन् क्षेमं मङ्गलमयं श्रीकृष्णधाम प्राप्नुयात्। नास्ति किञ्चन प्रार्थनीयं यस्येति विरक्तो वा। हि शब्दो हेतौ। यद्वा या पूर्वजैर्धृता सा एषा इत्यन्वयः॥ ३॥

भाषार्थ

श्रीशुकदेवजी बोले कि हे राजन्! भगवान‌ने सगुण मूर्ति धारण कर जीवोंके अर्थ, धर्म, काम और मोक्षके लिये इनके साधनभूत बुद्धि, इन्द्रिय, मन और प्राणकी रचना की है। अथवा बुद्धि आदि युक्त देहोंकी रचना की है एवं जिसने रचना की है उसी सगुणका श्रुतियाँ साक्षात् प्रतिपादन करती हैं और निर्गुणका तात्पर्य वृत्तिसे। अथवा यों समझो—प्राकृत गुणोंसे रहित निर्गुण भगवान् श्रीकृष्ण ही हैं श्रुतियाँ साक्षात् उन्हींका प्रतिपादन करती हैं। गीतामें स्पष्ट कहा है—'वेदैश्च सर्वैरहमेव वेद्यः'। सब वेदोंसे मैं ही जानने योग्य हूँ॥२॥

अत्र ते वर्णयिष्यामि गाथां नारायणान्विताम् ।
नारदस्य च संवादमृषेर्नारायणस्य च ॥ ४ ॥
एकदा नारदो लोकान् पर्यटन् भगवत्प्रियः ।
सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम् ॥ ५ ॥
यो वै भारतवर्षेऽस्मिन् क्षेमाय स्वस्तये नृणाम् ।
धर्मज्ञानशमोपेतमाकल्पादास्थितस्तपः ॥ ६ ॥

भक्तरञ्जनी

अत्र श्रुतयः कथं चरन्तीत्येतस्मिन्नर्थे अत्र श्रुतीनां ब्रह्मपरत्वे वा । नारायणः प्रवक्तृरूपेणान्वितो यस्यां ताम् । कुतः नारदस्य ऋषेः ऋषिवेषधरस्य नारायणस्य च संवादं संवादरूपाम् । नारायणः श्रीकृष्ण एवान्वितः उपक्रमोपसंहारादिषु अनुगतो यस्यां तां गाथामितिहास-मितितोषिणी । ऋषेरिति क्षीरोदशायिनो व्यावृत्त्यर्थमुक्तम् । एकश्चकारः संबंधपरम्परां द्योतयति ॥ ४ ॥ एकदा भगवत्प्रियो नारदः लोकान् लोकेषु पर्यटन् सनातनं नित्यविग्रहम् ऋषिं धर्मपुत्रम् श्रीनारायणं द्रष्टुं बदरिकाश्रमं ययौ। भगवत्प्रिय इत्यत्र षष्ठीसमासो बहुव्रीहिर्वा ॥५॥ वै प्रसिद्धेऽस्मिन् भारतवर्षे नृणां क्षेमाय मोक्षाय स्वस्तये भोगाय च यः तप आस्थितः धृतवान् तं द्रष्टुमित्यन्वयः । आकल्पाद् ब्रह्मप्रथम-दिनप्रथमभागमारभ्य । एतच्च लोकशिक्षार्थमिति ज्ञेयम् । धर्मो भक्तिकृत् । ज्ञानं भगवल्लीलाविषयकम् । शमो भगवच्चित्ततेतिविवेकः ॥ ६ ॥

*भाषार्थ*

सो यह ब्रह्म श्रीकृष्णका प्रतिपादन करनेवाली जय-जय इत्यादि उपनिषद् पूर्वजोंके भी पूर्वज ब्रह्मा आदिके द्वारा धारण की गई है इसलिये इसके ब्रह्मपरत्वमें सन्देह नहीं करना । जो कोई अन्य भी प्राणी इसको हृदयमें धारण कर इसी बातका मनन करेगा वह देह आदि उपाधियोंसे रहित होकर मङ्गलमय भगवान् श्रीकृष्णके धामको प्राप्त हो जायगा ॥ ३ ॥ इन्हीं श्रुतियोंके ब्रह्मपरत्वके विषयमें हम एक इतिहासका वर्णन करेंगे जिसको नारायणने स्वयं वक्ता होकर नारदजीसे कहा है अतएव यह इतिहास नारद तथा ऋषिवेषधारी नारायणका संवादरूप है ॥ ४ ॥ एक समय भगवान्के प्रिय श्री नारदजी लोकोंमें भ्रमण करते हुए नित्यमूर्ति ऋषि नारायणके दर्शन करनेके लिये उनके आश्रम ( बदरिकाश्रम ) में गये ॥ ५ ॥

तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः ।
परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह ॥ ७ ॥
तस्मै ह्यवोचद्भगवानृषीणां शृण्वतामिदम् ।
यो ब्रह्मवादः पूर्वेषां जनलोकनिवासिनाम् ॥ ८ ॥

श्रीभगवानुवाच

स्वायम्भुव ब्रह्मसत्रं जनलोकेऽभवत्पुरा ।
तत्रस्थानां मानसानां मुनीनामूर्ध्वरेतसाम् ॥ ९ ॥

भक्तरञ्जनी

तत्र कलापग्रामे स्वाश्रमे तन्निवासिभिः ऋषिभिः सह उपविष्टं नारायणं नारदः प्रणतो भूत्वा इदमेव कथञ्चरन्तीत्येव अपृच्छत् । हे कुरूद्वह परीक्षित् ! ॥ ७ ॥ पूर्वेषां सनन्दनादीनां यो ब्रह्मणः वेदस्य वादः श्रीकृष्णप्रतिपादनविषयको निर्णयः तदिदं तस्मै नारदाय अवोचत् अन्येषां शृण्वतां सताम् । हीति प्रसिद्धार्थे । इदमिति लिङ्गवैषम्यं न दोषाय । 'यत्रोद्देश्यविधेयत्वं तत्रायं नियमो नहि' इत्युक्तेः ॥ ८ ॥ हे स्वायम्भुव ब्रह्मपुत्र नारद ! पुरा कल्पादौ जनलोके मानसानां ब्रह्मणो मानसपुत्राणां मुनीनां सनन्दनादीनां ब्रह्मसत्रं वेदनिर्णयरूपो यज्ञोऽभूत् । कथम्भूतानाम् । ऊर्ध्वरेतसां नैष्ठिकब्रह्मचारिणाम् । यत्र समाना एव वक्तृश्रोतृभावेन ब्रह्म वेदं वा मीमांसते तद् ब्रह्मसत्रम् ॥९॥

भाषार्थ

जो नारायण (आकल्पात्) ब्रह्माके प्रथम दिनसे लेकर आजतक इसी भारतवर्षमें मनुष्योंके ऐहिक तथा पारलौकिक कल्याणके लिये धर्मज्ञान और शमसे युक्त अर्थात् इनको बढ़ानेवाले तपका आश्रय करके स्थित हैं ॥ ६ ॥ हे परीक्षित ! उसी कलापग्रामस्थ अपने आश्रममें ऋषियोंसे घिरे बैठे हुए श्रीनारायणको प्रणाम करके नारदने इसी प्रश्नको पूछा जो आप पूछ रहे हैं ॥ ७ ॥ उस समय भगवान् नारायणने ऋषियोंके सुनते सुनते जनलोकवासी पूर्वज सनकादिकोंके प्रश्नोत्तररूपसे जो वेदका निर्णय हुआ था उसीको नारदसे कहा ॥ ८ ॥ श्री भगवान् बोले कि हे नारद ! जनलोकमें रहनेवाले ब्रह्माके मानस पुत्र नैष्ठिक ब्रह्मचारी सनकादि मुनियोंका पहले जनलोकमें वेद-निर्णय-विषयक ज्ञान-यज्ञ हुआ था ॥ ९ ॥

श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरम् ।
ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते ॥१०॥
तत्र हाऽयमभूत् प्रश्नस्त्वं मां यमनुपृच्छसि ।
परिहारांश्च तान्सर्वान् वक्ष्येऽहं शृणु तेऽनघ ॥११॥

भक्तरञ्जनी

अहो मया तत्कथं न ज्ञातमित्याह—श्वेतेति । श्वेतद्वीपं क्षीरोदस्थानं भगवतोऽनिरुद्धस्यक्रीडासाधनमिति श्रीवल्लभाचार्याः । तदीश्वरमनिरुद्धम् । ब्रह्मवादः वेदः कं प्रतिपादयतीति विचारः सम्यक् प्रवृत्तः । यत्र वादे सर्वा अपि श्रुतयः कृष्णे शेरते समन्विता बभूवुः । यद्वा । ब्रह्मवादः श्रुतिनिर्णयः सुसंवृत्तः सुसम्पन्नः । यत्र श्रुतयः दिव्यविग्रहधारिण्यः सत्यः शेरते भगवता सह दिव्यशय्यायामिति शेषः । तत्स्पर्शसुखानुभवं चक्रुरित्यर्थः 'वयमपि ते समा' इति वक्ष्यमाणोक्तेः तादृगिच्छासम्पन्नत्वादिति तात्पर्यम् ॥१०॥ तत्र जनलोके । ह स्पष्टम् । अयं प्रश्नोऽभूत् यं त्वं मामनुपृच्छसि अतः तान् सर्वानपि प्रश्नस्य परिहारान् उत्तराणि अहं ते वक्ष्ये त्वं शृणु । हे अनघ ! अनु ततः पश्चात् त्वां विना न केनापि अयं प्रश्नः कृतोऽस्तीति श्लाघा सूचिता ॥११॥

भाषार्थ

तुम उसमें सम्मिलित इसलिये न हो सके थे कि हमारी ही साक्षात् मूर्ति अनिरुद्धके दर्शन करनेके लिये तुम श्वेत द्वीपमें गये थे उसी समय वेदके प्रतिपादनका विचार प्रश्नोत्तररूपसे आरम्भ हो गया जिसका विचार करते करते अन्तमें सभी श्रुतियाँ भगवान् श्रीकृष्णमें ही लीन होने लगीं । अर्थात् उन्हींका साक्षात् प्रतिपादन कर चरितार्थ हो गईं ॥१०॥ उस समय स्पष्ट रूपसे यही प्रश्न हुआ था जो तुम हमसे पूछ रहे हो । अब हम सभी प्रश्नोंका उत्तर कहेंगे । हे निर्मलमते ! तुम सुनो ॥११॥

१—कतिपयपुस्तकेषु अयं पाठः प्रमादाच्च्युतः प्रतिभाति पूर्वाचार्यैर्व्याख्यातत्वात् उपयुक्तत्वाच्चात्राङ्कितः ।

तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः ।
अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे ॥१२॥

सनन्दन उवाच

स्वसृष्टमिदमापीय शयानं सह शक्तिभिः ।
तदन्ते बोधयाञ्चक्रुस्तल्लिङ्गैः श्रुतयः परम् ॥१३॥
यथा शयानं सम्राजं वन्दिनस्तत्पराक्रमैः ।
प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयन्त्यनुजीविनः ॥१४॥

भक्तरञ्जनी

श्रुतं शास्त्रम् । तपः चित्तैकाग्रता । शीलः सुस्वभावः । स्वीया मित्राणि । मध्यमा उदासीनाः तुल्याः श्रुतादयो येषाम् । तुल्याः स्वीयादयो येषाम् । एकं सनन्दनं । प्रवचनं प्रवक्तारं चक्रुः । अपरे त्रयः सनकादयः शुश्रूषवो बभूवुः । प्रवचनमिति कर्तरि ल्युः । प्रकृष्टं वचनं यस्येति वा ॥१२॥ स्वेन सृष्टमिदं विश्वं प्रलयसमये आपीय संहृत्य शक्तिभिः प्रियाभिः रुक्मिण्यादिभिः सह शयानं निद्राणमिव परं कृष्णं तदन्ते प्रलयान्ते श्रुतयः तन्निश्वासभूता वेदा बोधयाञ्चक्रुः । बोधयन्त्य इव तुष्टुवुरित्यर्थः । कैः । तल्लिङ्गैः । तन्महत्त्वप्रतिपादकैर्वाक्यैः ॥ १३ ॥ यथा अनुजीविनः सेवकाः वन्दिनः स्तुतिपाठकाश्च प्रत्यूषेऽभ्येत्य सम्राजं चक्रवर्तिनं राजानं बोधयन्ति तद्वत् । कैः । तस्य पराक्रमा दिग्विजयादयो येषु तैः सुश्लोकैः मधुरपद्यैः । अनुजीविन इति वन्दिविशेषणं वा ॥१४॥

भाषार्थ

यद्यपि ये चारों भाई शास्त्र, ज्ञान, तपस्या और मृदु स्वभावमें समान थे तथा इनकी दृष्टिमें मित्र, शत्रु और उदासीन भी एकसे ही थे । फिर भी कौतुकवश उन्होंने सनन्दनको वक्ता कर लिया और शेष तीनों भाई श्रोता बन गये ॥ १२ ॥ सनन्दनजी बोले कि स्वयं अपनेसे रचित इस विश्वको प्रलयकालमें अपनेमें लीन करके रुक्मिणी आदि शक्तियोंके साथ शयन करते हुए परमेश्वर श्रीकृष्णको मूर्तिमती श्रुतियाँ सृष्टिके समय भगवान्के महत्त्वद्योतक नाना वाक्योंसे मानो जगाती हुई स्तुति करने लगीं । जिस प्रकार स्तुति करनेवाले सेवकजन प्रातःकालमें आकर सोते हुए सम्राट्को उसके पराक्रम-सूचक सुन्दर पद्योंसे जगाते हैं ॥१३, १४॥

तदेवं सर्वश्रुतीनां श्रीकृष्णप्रतिपादने तात्पर्यं तत्र च सर्वा अपि श्रुतयः अष्टाविंशतितत्त्वजालाज्जीवराशीनुद्धर्तुं स्वस्ववर्गभेदेनाष्टाविंशतिधा भूत्वा अष्टाविंशत्या पद्यैः स्तुतिव्याजेन नानामतानि खण्डयन्त्यः प्रधानमुखेन सर्वोपनिषदादिसारभूतां भक्तिमेव दर्शयन्त्यश्च आदौ श्रीकृष्णस्वरूपलक्षणमभिधाय वन्दिन इव जयोद्घोषपूर्वकमविद्यानिवृत्तिं प्रार्थयन्ते—जय जयेति ।

( श्रीकृष्णस्वरूपलक्षणपरेयम् )

श्रुतय ऊचुः

जय जय जह्यजामजित दोषगृभीतगुणां
त्वमसि यदात्मना समवरुद्धसमस्तभगः ।
अगजगदोकसामखिलशक्त्यवबोधक ते
क्वचिदजयाऽऽत्मना च चरतोऽनुचरेन्निगमः ॥१॥१५॥

---

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः—अगजगदोकसां स्थावरजङ्गमजीवानाम् अखिलशक्त्यवबोधक ! हे अजित ! त्वं जय । दोषगृभीतगुणाम् अजाम् अविद्यां जहि त्वं जय । यत् यस्मात् त्वम् आत्मना समवरुद्धसमस्तभगोऽसि अतः निगमो वेदः ते अनुचरेत् प्रतिपादयेत् । कथंभूतस्य ते । क्वचित् सर्गादौ अजया मायया नित्यं च आत्मना स्वरूपशक्त्या च सह चरतः विहरतः ते । चरतस्ते कर्मणि षष्ठ्यौ चरन्तं त्वामित्यर्थः ।

हे अजित श्रीकृष्ण ! त्वं जय निजोत्कर्षं प्रकटीकुरु । कथम् । जीवानामजामविद्यां जहि नाशय इत्यतो जय । किञ्च हे शक्त्यवबोधक ! तेषां शक्त्युद्बोधं च कुरु इत्यतोऽपि जयेति द्विरुक्तिः । यत् यतः त्वं तु आत्मना स्वरूपेणैव समवरुद्धसमस्तभगः आत्मनीति शेषः । समवरुद्धः समस्तो भगो येन तथाभूतः सम्प्राप्तसमस्तैश्वर्योऽसि । कुतः । हे अखिल ! पूर्णस्वरूप ! अतः निगमः श्रुतिसमूहः एवंविधं ते त्वामेव अनुचरेत् अनुचरति सदा सेवते प्रतिपादयतीत्यर्थः । लडर्थे लिङ् । कथंभूतं त्वाम् । क्वचित् सृष्ट्यादिसमये अजया मायया बहिरङ्गशक्त्या सह चरतः चरन्तं विहरन्तम् । सर्वदा च आत्मना स्वरूपशक्त्या श्रीराधया च सह विहरन्तं त्वाम् । चरतः ते इति कर्मणि षष्ठ्यौ संबंधद्योतनार्थे । कीदृशीमजाम् । दोषाय ज्ञानाद्यावरणाय अभिमानप्रापणाय वा गृभीताः गृहीताः प्रकटिताः

भक्तरञ्जनी

गुणा यया । यद्वा । दोषा जीवानां दोषप्रापका गृहीता गुणा यया । दोषाय जीवानां तव भजनवैमुख्याय गृहीता गुणा ययेति वा । यद्वा । न जिताः दोषाः कामादयो यैस्तैरजितदोषैरज्ञानिभिः गृहीता भोग्यत्वेन स्वीकृता गुणाः शब्दादयो यस्या इत्येकं पदम् । अजितेत्यस्योभयथा सबंधः । कथंभूतानां जीवानाम् । अगजगदोकसाम् । अगानि स्थावराणि जगन्ति जङ्गमानि च ओकांसि शरीराणि येषां तेषां स्थावरजङ्गमदेहवतामित्यर्थः । अखिलेत्येकपदं वा । अनुचरेत् । एतेन निर्गुणे श्रुतयः कथं चरन्तीति प्रश्नस्योत्तरमप्युक्तं भवति । तथा च निर्गुणशब्दस्य प्राकृतगुणराहित्यपरत्वाद् ब्रह्मणः जगज्जन्मादिकारणत्वोपयुक्तानन्तकल्याणगुणविशिष्टत्वात् सत्यज्ञानानन्दादिगुणनिधित्वाच्च सगुणश्रुतीनां निर्गुणब्रह्मप्रतिपादने न कोऽपि विरोध इति सर्वमनवद्यम् । केचित्तु जय जयेति आदरे हर्षे वा वीप्सेत्याहुः । परे तु जयति सर्वमिति व्युत्पत्त्या जयेति सम्बोधनमाहुः । गृभीतेत्यत्र हृग्रहोर्भश्छन्दसीति भकारः । इतः परं भवन्निधना इत्यन्तं सप्तभिर्दशभिश्च यतिसत्त्वान्नर्कुटकं नाम छन्दः । 'हयदशभिर्नजौ भजजला गुरु नर्कुटकम्' इति वृत्तरत्नाकरलक्षणात् ॥ १ ॥१५॥

## पद्यानुवादः

**त्वमसि लब्धभगो निजरूपतो जहि जयाऽजित दोषगुणाश्रजाम् ।**
**स्वयमिमे नहि तद्धनने क्षमा वदति ते क्षमतां श्रुतिरादितः ॥१॥**

भाषार्थ

इस प्रकार सभी श्रुतियोंका तात्पर्य भगवान् श्रीकृष्णमें है अतः सभी श्रुतियाँ अठाईस तत्त्वोंका जाल जो संसार है उससे जीव-राशिका उद्धार करनेके लिये अपने अपने वर्ग-भेदसे अठाईस अठाईसका गोल बनाकर अठाईस ही पद्योंसे स्तुतिके व्याजसे नाना मतोंका खण्डन कर प्रधानके मुखसे समस्त वेद, उपनिषद् और पुराण इनका सार भक्ति ही है यह दिखलाती हुई सर्वप्रथम भगवानके स्वरूपका लक्षण बताकर वन्दीजनके समान जय ध्वनि करती हुई अविद्या-निवृत्तिकी प्रार्थना करती हैं ।

हे अजित श्रीकृष्ण ! आपने अपनेसे ही समस्त ऐश्वर्यको प्राप्त किया है । एवं आप ही स्थावर-जङ्गम ( जड़-चेतन ) समस्त जीवोंकी शक्तिको जाग्रत करनेवाले हैं । अतः ज्ञानादिको आवरण ( ढाँकने ) के लिये गुणोंको ग्रहण

ननु 'इन्द्रो यातोऽवसितस्य राजा' इत्यादिना इन्द्रादयः प्रतिपाद्यन्तो कथमहमिति चेदत्राहुः—बृहदिति ।

( अभेदोपासनापरेयम् )

बृहदुपलब्धमेतदवयन्त्यवशेषतया
यत उदयास्तमयौ विकृतेर्मृदि वाऽविकृतात् ।
अत ऋषयो दधुस्त्वयि मनोवचनाचरितं
कथमयथा भवन्ति भुवि दत्तपदानि नृणाम् ॥२॥१६॥

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः—हे भगवन् ! एतत् उपलब्धं सर्वमपि बृहद् ब्रह्म त्वामेव अवशेषतया अवयन्ति ऋषयो जानन्ति । कुतः । अविकृतात् यतो ब्रह्मणः सर्वस्य उदयास्तमयौ भवतः । वा यथा विकृतेर्घटादेर्मृदि तद्वत् । अतः ऋषयो वेदाः मनोवचनाचरितं ध्यानकीर्तनादि त्वयि त्वन्निमित्तमेव दधुः प्रतिपादयामासुः न पृथग्विकारेषु । यतो नृणां कुत्रापि दत्तपदानि भुवि कथमयथा भवन्ति अदत्तानि भवन्ति अतो यत्किमपि विकारजातं प्रतिपादयन्तो वेदास्त्वामेवेति ।

एतत् उपलब्धं प्रतीयमानमिन्द्रादि सर्वं बृहद् ब्रह्मैव तच्च त्वमित्येव श्रुतयोऽवयन्ति निश्चिन्वन्ति । कथम् । ब्रह्मणस्तवैव अवशेषतया । कुतः । यतो बृहतः त्वत्त एव सर्वस्य उदयास्तमयौ उत्पत्तिलयौ भवतः । सर्वोपादानत्वात् । अथापि अविकृतात् विकारशून्यात् इत्यद्भुतकारणत्वं तवेत्यर्थः । अत्र दृष्टान्तः । वा यथा विकृतेर्घटादेर्मृदि उदयास्तमयौ भवतस्तद्वत् । अतः ऋषयो मन्त्राः तद्द्रष्टारो वा मनसा आचरितं ध्यानं, वचनाचरितं कीर्तनं च त्वय्येव त्वन्निमित्तमेव दधुः चक्रुः प्रतिपादयामासुः । न पृथगिन्द्रादिविकारेष्वित्यर्थः । युक्तं चैतत् । यतो नृणां भूतलवर्त्तिनां

भाषार्थ

करनेवाली इस अविद्या शक्तिका नाश कीजिये । आपकी जय हो । ये जीव स्वयं मायाको हटानेमें समर्थ नहीं हैं किन्तु आप ही हैं इसलिये सृष्टिके आदि और अन्तमें बाह्य एवं अन्तरङ्ग शक्तियोंसे विहार करनेवाले आपका ही समस्त श्रुतियाँ प्रतिपादन करती हैं । हे भगवन् ! आपकी जय हो ॥ १ ॥१५॥

भक्तरञ्जनी

यत्र कुत्रापि वृक्षकुड्यप्रेङ्खनादिषु दत्तानि स्थापितानि पदानि भुवि कथमयथा भवन्ति अदत्तानि भवन्ति न कथमपि अतो यत्किमपि विकारजातमाकाशादि प्रतिपादयन्तो वेदास्तत्तद्द्वारा मुख्यविषयं सर्वान्तर्यामिणं सर्वकारणभूतं त्वामेव प्रतिपादयन्ति 'सर्वे पादा हस्तिपादे निमग्ना' इति न्यायादित्यर्थः। यद्वा। मनोवचनाचरितमिति समाहारैकवचनम्। मनो दधुरित्यनेन ध्यानमुक्तम्। वचनमित्यनेन कीर्त्तनमुक्तम्। आचरितमित्यनेन पूजनञ्चोक्तम्। एवं च मनोवाक्कायैर्मुमुक्षुभिः भगवत आराधनीयत्वं सूचितम्। यत इति सार्वविभक्तिकतसिः तेन पञ्चमीसप्तम्योरुभयोरपि ग्रहणं यस्मादुत्पत्तिः यस्मिंश्च लय इत्यर्थः ॥ २ ॥१६॥

## पद्यानुवादः

यदपि वर्णितमिन्द्रयमादि तत् त्वमसि शेषतया मृदिवाऽत्र सत्।
त्वदुपगाः[1] श्रुतयोऽप्यपरा यथा क्व च न दत्तमदत्तपदं भुवि ॥२॥

### भाषार्थ

यदि यह कहो कि श्रुतियाँ इन्द्रादिका प्रतिपादन करती हैं हमारा तो नहीं तो इसका उत्तर सुनो। श्रुतियाँ कहती हैं कि हे भगवन् जिस प्रकार (विकृति) घट, शराव आदिकी मृत्तिकासे उत्पत्ति और उसीमें लय होनेसे शेष मृत्तिका ही सत्य रह जाती है। उसी प्रकार यह समस्त विश्व निर्विकार आपसे ही उत्पन्न एवं आपमें ही लीन होनेपर केवल आप ही सत्यरूपसे शेष रह जाते हैं। अतएव श्रुतियोंमें जो इन्द्रादिका श्रवण पाया जाता है वह सब ब्रह्मरूपसे आप ही हैं ऐसा हम सभी निश्चित करती हैं। अतएव हम सब आपकी ही प्रसन्नताके निमित्त ध्यान, कीर्त्तन एवं पूजनका प्रतिपादन करती हैं। पृथक्-पृथक् इन्द्र आदि विकारोंका नहीं। और यह ठीक भी है कि मनुष्य, वृक्ष, दीवाल और झूला आदि किसीपर पैर क्यों न रक्खे पर वह पृथ्वीपर ही रक्खा माना जाता है। अतः श्रुति किसी भी विकारका प्रतिपादन क्यों न करे पर वह सब आपका ही होता है क्योंकि वे सब आपके ही अवयव हैं एवं सबमें अन्तर्यामी रूपसे आप ही स्थित हैं ॥ २ ॥१६॥

---

१—अपरा अन्यपरा अपि श्रुतयः त्वदुपगाः त्वामुपगच्छन्तीति त्वत्प्रतिपादनपरा एवेत्यर्थः। यथा क्व च कुत्रापि दत्तं पदं भुवि अदत्तपदं न तथा।

उक्तमेवार्थं पुनर्द्रढयन्त्य आहुः—इतीति ।

( भक्तिपरेयम् )

इति तव सूरयस्त्र्यधिपतेऽखिललोकमल-
क्षपणकथामृताब्धिमवगाह्य तपांसि जहुः ।
किमुत पुनः स्वधामविधुताशयकालगुणाः
परम भजन्ति ये पदमजस्रसुखानुभवम् ॥३॥१७॥

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः—हे त्र्यधिपते ! सूरयः इति हेतोः तव अखिललोकमलक्षपणकथामृताब्धिम् अवगाह्य तपांसि दुःखानि जहुः । हे परम ! ये पुनः अजस्रसुखानुभवं तव पदं भजन्ति ते तपांसि जहतीति किमुत वक्तव्यम् । कथंभूता ये । स्वधामविधुताशयकालगुणाः ।

हे त्र्यधिपते ! त्रयाणां गुणानां लोकानां वा अधिपते हे भगवन् ! त्वमेव परमार्थत्वाद् भजनीय इति हेतोः सूरयो विवेकिनः अखिललोकानां मलस्य पापस्य क्षपणा विनाशिका मलं क्षपयतीति वा या कथा सैव अमृताब्धिः तमवगाह्य प्रविश्य अत्यादरेण श्रुत्वेत्यर्थः । तपन्तीति तपांसि तापत्रयाणि सर्वदुःखानि वा जहुः त्यक्तवन्तः । यदा एवं तदा हे परम ! सर्वाधिक भगवन् ! ये पुनः तव पदं स्वरूपं श्रीविग्रहं भजन्ति ध्यायन्ति ते तपांसि जहतीति किमुत वक्तव्यम् । कथंभूतं पदम् । अजस्रसुखानुभवं नित्यानन्दानुभवरूपम् । यद्वा । अजस्रसुखस्य नित्यसुखस्य श्लेषादेरनुभवो यस्मात्तत् । कथंभूता ये । स्वधामविधुताशयकालगुणाः । स्वस्य भगवतः धामानि आश्रयीभूतलीलाचरितानि तैर्विधुताः दूरीकृता आशयगुणा अन्तःकरणधर्मा रागद्वेषादयः कालगुणा जरादयश्च यैस्ते तथाभूताः । दिव्यविग्रहाः सन्तः । यद्वा । परा सर्वोत्कृष्टा मा राधाशक्तिर्यस्य तत्संबुद्धौ । केचित्तु मा न परोऽधिको यस्मात्स परम इत्याहुः । तपांसि इति तप् सन्तापे इत्यस्मात् ॥ ३ ॥१७॥

पद्यानुवादः

इति बुधा जनकल्मषनाशिनीं तव निशम्य कथां विजहुर्व्यथाम् ।
किमुत ये चरितास्तमनोगुणा जहति तां[1]नु भजन्ति पदं तव ॥३॥

१ तां व्यथाम् ।

सम्प्रति पूर्वपद्योक्तकथाश्रवणभगवत्स्वरूपचिन्तनोभयविधभजनहीनान्निन्दन्त्य आहुः—दृतय इति ।

( उपदेशपरेयम् )

दृतय इव श्वसन्त्यसुभृतो यदि तेऽनुविधा
महदहमादयोऽण्डमसृजन् यदनुग्रहतः ।
पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः
सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥४॥१८॥

---

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः—हे भगवन् ! यदि तेऽनुविधाः भक्ताः तर्हि असुभृतः सफलश्वासाः अन्यथा दृतयः भस्त्रा इव श्वसन्ति वृथाश्वासाः । किं बहुना यदनुग्रहतः महदहमादयोऽण्डं ब्रह्माण्डमसृजन् स्वाभीष्टमाप्नुवन् । अथ अतः स त्वमेक एव सेव्य इति शेषः । कुतः । अन्नमयादिषु कोशेषु पुरुषविधः पुरुषसंज्ञकः सन् योऽन्वयः अनुप्रविष्टः अत्र एषु चरम आनन्दमयश्च । किञ्च सदसतः परं एषु लीयमानेषु अवशेषं ऋतं सत्यं च यद् ब्रह्म तदेव त्वं सत्यानन्दमयत्वात्तव सेव्यत्वमिति ।

हे भगवन् ! यदि ते तव अनुक्षणं सेवां विदधति कुर्वन्तीति अनुविधाः भक्ताः तर्हि असुभृतः सार्थकमसून्बिभ्रतीति सफलश्वासा इत्यर्थः । अन्यथा दृतयः भस्त्रा इव श्वसन्ति निष्फलश्वासा इत्यर्थः ।

भाषार्थ

फिर उसी बातको दृढ़ करती हुई श्रुतियाँ कहती हैं—हे परम परमेश्वर ! त्रिलोकके स्वामी भगवन् ! श्रुतियाँ आपका ही प्रतिपादन करती हैं इस कारणसे विवेकी पुरुष समस्त लोकोंके पापोंका नाश करनेवाले आपके कथारूपी अमृतसमुद्रमें प्रवेश करके ( संसारके समस्त पापोंको दूर करनेवाली आपकी अमृतमयी कथाका श्रवण करके तीनों तापोंका त्याग करते हैं ) तो फिर हे भगवन् ! जिन्होंने आपके लीलाचरितके प्रभावसे मनके रागादि दोषोंको एवं कालके जरादि दोषोंको नष्ट कर दिया है ऐसे भक्तजन नित्य सुखको देनेवाले आपके स्वरूपका ध्यान और साक्षात्कार करते हैं तो वे तापोंका त्याग करते हैं इसमें तो कहना ही क्या है ॥ ३॥१७॥

भक्तरञ्जनी

किं बहुना यस्य तव अनुग्रहात् जगद्देवो महदहङ्कारादयो ब्रह्माण्ड-मसृजन् उत्पादयामासुः स्वाभीष्टमाप्नुवन्नित्यर्थः । अथ अतः अन्न-मयादिषु शरीरान्तर्वर्तिषु पञ्चसु कोशेषु मध्ये पुरुषविधः अन्तर्यामि-संज्ञकः सन् योऽन्वयः अनुप्रविष्टः अत्र एषु चरमोऽन्तिम आनन्दमयश्च स त्वमेक एव सेव्य इति शेषः । कुतः । सदसतः कार्यकारण-रूपायाः प्रकृतेः परं महदादिषु लीयमानेषु अवशिष्यते इत्यवशेषम् । अतः ऋतं सत्यं च यत् वेदान्तिनां ब्रह्म तदेव त्वमित्यन्वयः । अनु एति प्रविशतीति अन्वयः । आनन्दमय इत्यत्र प्राचुर्ये मयट् । पञ्चकोशास्तु अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाख्या ज्ञेयाः । केचित्तु 'अनु हीने च सादृश्ये' इति विश्वकोषात् अनुशब्दो हीना-र्थकः । विधीयन्ते शास्त्रेणेति विधाः भगवद्भजनाद्यास्ताभिर्हीना अनुविधाः । तथाहि असुभृतो जीवाः यदि तेऽनुविधाः विमुखाः तर्हि दृतय इव श्वसन्तीति एकान्वयमाहुः । यद्वा । जना यदि विधा भजनादिप्रकारान् अनुलङ्घ्य तेषाम् असुभृतः सुष्ठुधारका न भवन्ति तदा दृतय इव श्वस-न्तीत्यर्थः । नीलकण्ठस्तु महदहमादयस्तवानुग्रहतः यदण्डमसृजन् तदनु-विधाः तत्प्रपञ्चासक्ता यदि असुभृतः जीवाः तर्हि दृतय इव श्वसन्तीत्य-न्वयमाह ॥४॥१८॥

## पद्यानुवादः

**न दृतिवद्विफलश्वसना जनास्तव यतो महदाद्यसृजज्जगत् ।**
**स पुरुषोऽखिलकोशगतोऽन्तिमः सदसतः पर एष्ववशिष्यते ॥४॥**

*भाषार्थ*

पूर्वमें भगवान्‌की कथाका श्रवण और उनके स्वरूपका ध्यान ये दो बातें बताई गईं । अब इनसे जो हीन प्राणी हैं उनकी निन्दा करती हुई श्रुतियाँ कहती हैं—हे भगवन् ! यदि मनुष्य आपके भक्त हैं तो उनके प्राण सार्थक हैं अन्यथा लोहारकी भस्त्रा ( भाती ) के समान वे व्यर्थ ही श्वास लेते हैं । अधिक क्या कहें महत्, अहङ्कार आदि देवताओंने भी जिन आपके ही अनुग्रहसे ब्रह्माण्डकी रचना कर अपने अभीष्टको प्राप्त किया । इसलिये शरीरके अन्तर्गत पाँच कोशोंमें अन्तर्यामी रूपसे प्रविष्ट होकर अन्तिम आनन्दमय आप ही सबके सेव्य हैं क्योंकि सबके नाश हो जानेपर शेष रहने वाला प्रकृतिसे परे सत्यस्वरूप जो ब्रह्म है वह आप ही हैं ॥ ४ ॥ १८ ॥

उपासनाया नानात्वात् योगिनां योगोपासनया भगवत्प्राप्तिं दर्शयन्त्य आहुः—उदरमिति ।

( योगपद्धतिपरेयम् )

उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः
परिसरपद्धतिं हृदयमारुणयो दहरम् ।
तत उदगादनन्त तव धाम शिरः परमं
पुनरिह यत्समेत्य न पतन्ति कृतान्तमुखे ॥५॥१८॥

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः—हे भगवन् ! ऋषिवर्त्मसु ये कूर्पदृशः सूक्ष्मदृशो योगिनस्ते पूर्वम् उदरम् उदरस्थं ब्रह्म उपासते ( पश्चात् ) आरुणयः अरुणोदयवत्प्रकाशोन्मुखाः सन्तः परिसरपद्धतिं सुषुम्णादिनिर्गमस्थानं दहरं सूक्ष्मं हृदयं हृदयस्थं ब्रह्म उपासते । हे अनन्त ! ततो हृदयात् तव परमं धाम सुषुम्णाख्यं शिरः प्रति उदगात् ऊर्ध्वमगच्छत् । यत् धाम समेत्य पुनरिह कृतान्तमुखे संसारे न पतन्ति ।

हे भगवन् ! ऋषयोऽन्तर्गतिमन्तो योगिनस्तेषां वर्त्मसु दीक्षामार्गेषु ये कूर्पदृशः कूर्पेण शर्करया रजसा युक्ता दृशो दृष्टयो येषान्ते रजःपिहितदृष्टयः स्थूलदृष्टयः प्रथमदीक्षापन्ना इत्यर्थः । यद्वा । सूक्ष्मदृशः 'कूर्पं मृत्कणिकासूक्ष्महिंसाविक्षेपणेषु च' इति निरुक्तेः । ते उदरस्थं नाभिचक्रस्थं वैश्वानररूपं ब्रह्म उपासते । मूलाधारान्नाभिचक्रपर्यन्तं गतिं कुर्वन्तीत्यर्थः । ये च अरुणस्य इमे अपत्यानि आरुणयः अरुणोदयवत्प्रकाशोन्मुखाः द्वितीयदीक्षापन्ना इत्यर्थः । इदमर्थे संबन्धिनि अपत्यत्वारोपः । ते दहरं दुर्ज्ञेयत्वात् सूक्ष्मं हृदयं हृदयस्थमनाहतचक्रस्थं ब्रह्म उपासते । तदुक्तं योगशास्त्रे 'अनाहताख्यं तत्पद्मं योगिभिः परिकीर्तितम् । आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम् ॥ केचित्तु अरुणस्य सूर्यस्य ऋषेर्वा सम्प्रदायोपदेशसंबंधिनः 'विवस्वान्मनवे प्राह' इति गीतावचनात् तत्सम्प्रदायवंशजा इत्याहुः । कथंभूतं हृदयम् । परिसरपद्धतिम् । परितः सरन्ति प्रसर्पन्तीति परिसराः सुषुम्णादिनाड्यस्तासां पद्धतिं मार्गं प्रसरणस्थानमित्यर्थः । विशेषणस्य फलमाहुः—ततो हृदयात् हे अनन्त ! तव धाम उपलब्धिस्थानं सुषुम्णाख्यं परमं श्रेष्ठं ज्योतिर्मयं शिरो मूर्धानं प्रति उदगात् ऊर्ध्वमगच्छत् ।

भक्तरञ्जनी

आक्रामत् वा। मूलाधारादारभ्य हृदयं मध्यमं कृत्वा ब्रह्मरन्ध्रं प्रत्युद्गतं धामैव स्थलत्रयं गतं बभूवेत्यर्थः। यत्परमं शिरस्थं ब्रह्मरन्ध्रं समेत्य प्राप्य पुनरिह कृतान्तमुखे मृत्युमुखे अस्मिन् संसारे न पतन्ति। तन्निर्भिद्य गतस्य मोक्षाभ्युपगमात्। तथा च श्रुतिः—'शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति'॥ एका सुषुम्णाख्या मूर्धानं ब्रह्मरन्ध्रं गता। अमृतत्वं मोक्षः विष्वङ् नानागतयोऽन्या नाड्य उत्क्रमणे प्राणोत्क्रमणे संसारगमनद्वारभूता भवन्तीति तदर्थः। श्रीमज्जीवगोस्वामिनस्तु पूर्ववदेतत्पद्यमपि भक्तिपरकमेव योजयन्ति। तथाहि—हे अनन्त! ऋषयो भक्तास्तेषां वर्त्मसु ये कूर्पदृशः सूक्ष्मदृशः ते तव परिसरपद्धतिं क्रीडास्थानमुपासते अस्तु दूरतस्तव विग्रहः। तत्रापि केचित् उदरं मध्यवर्तित्वात् तव जन्मस्थलत्वाद्वा उदरं मथुरामुपासते इत्यर्थः। केचित् हृदयं वृन्दावनमुपासते। तत्कीदृशम्। आरुणयोत्। अरुणो रागस्तस्य समूह आरुणं तस्य या[1] प्राप्तिः तया उन्दन्तीति आरुणयोत् अनुरागवृन्दप्राप्तिमेदुरमित्यर्थः[2]। पुनः कीदृशम्। अहरम्। न ह्रियते न प्राप्यते इति अहरं दुरापमित्यर्थः। यद्वा। न विद्यते हरो हरणं यस्य शाश्वतमित्यर्थः। केचित् शिरः द्वारकारूपम्। कीदृशम्। परा मा लक्ष्मीर्यत्र। अतः कारणात् तव धाम क्रीडास्थानमुद्गात् उपासकानामुपासनार्थमुद्गादित्यर्थः। यत् धाम समेत्य पुनः इह कृतान्तमुखे न पतन्ति इति ॥५॥१६॥

## पद्यानुवादः

तनुदृशो[3] मणिपूरगतं हरिं हृदयमारुणयः समुपासते।
इति तवोर्ध्वमवाप्य सुषुम्णया परपदं न पतन्ति भवाम्बुधौ ॥५॥

*भाषार्थ*

उपासनाके अनेक भेद होनेसे योगियोंको भगवान्‌की प्राप्ति योगोपासनासे बतलाती हैं—हे भगवन्! योगियोंके मार्गमें प्रवृत्त सूक्ष्म दृष्टिवाले जो प्रथम दीक्षापन्न साधक हैं वे उदर (नाभिचक्र) में स्थित वैश्वानरकी उपासना करते

---

१—या धातोः सम्पदादित्वाद्भावे क्विप्। २—सान्द्रस्निग्धस्तु मेदुरः इत्यमरः। ३—तनुः सूक्ष्मः।

ननु भगवतः प्रतिदेहगतत्वेन नानात्वात् देहतारतम्येन तारतम्याच्च जीवसाम्ये सति कथमुपास्यत्वमिति शङ्कां परिहरन्त्य आहुः—स्वकृतेति ।

( स्वरूपनिरूपणपरेयम् )

स्वकृतविचित्रयोनिषु विशन्निव हेतुतया
तरतमतश्चकास्स्यनलवत् स्वकृतानुकृतिः ।
अथ वितथास्वमूष्ववितथं तव धाम समं
विरजधियोऽनुयन्त्यभिविपण्यव एकरसम् ॥६॥२०॥

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः—हे भगवन् ! स्वकृतविचित्रयोनिषु हेतुतया उपादानतया मुख्यप्रवेशासंभवाद् विशन्निव त्वम् तरतमतः न्यूनाधिक्-भावेन अनलवत् चकास्सि । कथंभूतस्त्वम् । स्वकृतानुकृतिः । स्वकृता योनीः देवमनुष्यादिरूपाः अनु करोतीति तथाभूतः । अथ अतः वितथासु मिथ्याभूतासु अमूषु योनिषु एकरसं समं तव धाम स्वरूपम् अवितथं सत्यमेव विरजधियोऽनुयन्ति जानन्ति । कथंभूताः । अभिविपण्यवः सर्वतो व्यवहारातीताः ।

स्वकृतासु स्वसृष्टासु विचित्रासु विविधासु योनिषु स्वाभिव्यक्तिस्थानेषु देवादिदेहेषु हेतुतया प्रयोजकतया अन्तर्यामितयेत्यर्थः । प्रवेशं कुर्वन्निव त्वं तरतमतः न्यूनाधिकभावेन चकास्सि प्रकाशसे । अज्ञैस्तथा प्रतीयसे इत्यर्थः । पूर्वमेव स्थितस्य वस्तुतः प्रवेशासंभवादिवेत्युक्तम् । कथंभूतः ।

भाषार्थ

हैं अर्थात् मूलाधारसे नाभिचक्रपर्यन्त प्राणापानकी समगति करते हुए वैश्वानरका ध्यान करते हैं । इस प्रकार नाभिचक्र भेदकर सत्त्वप्रधान गति होनेसे अरुणोदयवत् प्रकाशोन्मुख होते हैं इसलिये ये ही आरुणि संज्ञक कहलाते हैं । ये हृदयमें अर्थात् अनाहत चक्रमें सूक्ष्मरूपसे स्थित भगवान् श्रीकृष्णका एकादशोक्त ध्यान करते हुए ऊर्ध्वगति करते हैं । इसी हृदयसे बहुत-सी नाड़ियोंका प्रसरण हुआ है । उनमेंसे ज्योतिर्मयी एक सुषुम्णा नाड़ी मूलाधारसे लेकर हृदयको मध्यस्थल बनाती हुई ब्रह्मरन्ध्रतक ऊपर चली गई है । जो योगी इस नाड़ीसे ऊर्ध्वगति कर क्रमसे षट्चक्रका भेदन करके ब्रह्मरन्ध्रको प्राप्त कर लेते हैं वे फिर इस मृत्युके मुखरूप संसारमें नहीं आते हैं ॥ ५ ॥ १९ ॥

भक्तरञ्जनी

स्वकृता देवमनुष्यादियोनीरनुकरोतीति तथाभूतः सन् । किंवत् । अनलवत् । यथाग्निः स्वतस्तारतम्यरहितोऽपि ह्रस्वदीर्घवक्रादिकाष्ठेषु तदनुसारेण भासते तद्वत् । अथ यद्यप्येवम् अथ अथापि वितथासु मिथ्याभूतासु उपसंहृतासु सतीषु अमूषु योनिषु तव धाम स्वरूपम् अवितथं सत्यं विरजधियो निर्मलमतयाऽनुयन्ति जानन्ति । सत्यत्वे हेतुः । समम् एकरूपम् । कार्यानुप्रवेशेऽपि तारतम्यरहितमित्यर्थः । कुतः । एकरसं निर्विकारम् । मा राधा तया सहितं सममिति वा 'राधाकृष्णमयं जगत्' इत्युक्तेः । विरजधिय इत्यत्र हेतुः । अभिविपण्यवः । अभितः सर्वतो निर्वृतः विगतो नष्टः पण्युर्व्यवहारो येषान्ते । यद्वा । अभितः सर्वतो विशिष्टाः पण्यवः स्तुतिकीर्तनादयो येषान्ते तथोक्ताः । पण् व्यवहारे स्तुतौ च इत्युभयार्थकः । एतेन स्वातन्त्र्यात्तवोपाधिकृततारतम्याभावादखण्डितैश्वर्यस्योपास्यत्वं सुदृढमिति द्योतितम् । नु इति पृथक्पदं वा । नु निश्चितं यन्ति प्राप्नुवन्ति । अन्वयन्तीति पाठः प्रामादिकः । अनुपूर्वकेण्धातोः अनुयन्तीति पूर्वाचार्यव्याख्यानात् । अय् धातुकल्पने तु तस्यात्मनेपदित्वेनार्षकल्पनाया अगतिकगतित्वात् ॥६॥२०॥

## पद्यानुवादः

स्वकृतयोनिषु हेतुतया विशन्निव विभास्यसमं त्वमिहाग्निवत् ।
सममसूष्वसतीषु भवद्वपुः सदभियन्ति हरेऽमलबुद्धयः ॥६॥

*भाषार्थ*

यदि भगवान् प्रत्येक शरीरमें हैं और देहके अनुसार प्रतीत होते हैं तो वे जीवके समान हो गये फिर उनकी उपास्यता कैसे हुई ? इस शङ्काको दूर करती हुई श्रुतियाँ स्तुति करती हैं—

हे भगवन् ! आपकी मायासे रचित इन नाना योनियोंमें अन्तर्यामी रूपसे मानो प्रवेश कर उन योनियोंका अनुकरण करते हुए आप अज्ञोंकी दृष्टिमें न्यूनाधिक ( छोटे-बड़े ) रूपसे प्रतीत होते हैं । जैसे कि अग्नि काष्ठानुसार लम्बी गोल, आदि प्रतीत होती है । यद्यपि ऐसा है फिर भी जो आपकी स्तुति, कीर्तन आदिसे व्यवहारातीत निर्मलबुद्धि हैं वे तो इन मिथ्या योनियोंमें भी आपके स्वरूपको सत्य ही जानते हैं । क्योंकि हे भगवन् ! वह रूप सर्वत्र समान और एकरस अर्थात् निर्विकार है ॥ ६ ॥ २० ॥

अपि च कुतो नु इयमाशङ्का भगवतो देहाद्युपाधिकृतदोषप्रसङ्ग इति, यतोऽविद्यादिभिः संसरतस्त्वदात्मनो जीवस्यापि वस्तुतस्तत्कृतावरणादि न घटते कुतस्तवेत्याशयेनाहु :—स्वकृतेति ।

( अंशांशिभावपरेयम् )

स्वकृतपुरेष्वमीष्ववहिरन्तरसंवरणं
तव पुरुषं वदन्त्यखिलशक्तिधृतोंऽशकृतम् ।
इति नृगतिं विविच्य कवयो निगमावपनं
भवत उपासतेऽङ्घ्रिमभवं भुवि विश्वसिताः ॥ ७॥२१॥

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः—हे भगवन् ! अमीषु स्वकृतपुरेषु वर्तमानं पुरुषं जीवम् अखिलशक्तिधृतः तव अंशकृतम् अंशमिव कृतं वदन्ति श्रुतयः । कीदृशं पुरुषम् । अवहिरन्तरसंवरणं वाह्याभ्यन्तरावरण-शून्यम् । इति नृगतिं विविच्य कवयः भुवि विश्वसिताः सन्तः भवतः अङ्घ्रिम् उपासते । कथंभूतं । निगमावपनं ज्ञानोत्पादकम् । अत एव अभवं भवनिवर्तकं च । पुरं शरीरम् ।

हे भगवन् ! स्वकृतेषु स्वकर्मोपार्जितेषु पुरेषु अमीषु देवमनुष्यादि-देहेषु भोक्तृत्वेन वर्तमानं पुरुषं जीवं तव अंशमिव कृतम् अंशतुल्यं वदन्ति । यद्वा । अंशेन लीलाशक्त्या कृतं पृथक् कृतमिव श्रुतयः वदन्ति । कुतः । अखिलशक्तिधृतः । अखिला आश्चर्यशक्तीर्धरतीति-तथाभूतस्य अंशभूतसर्वशक्त्याश्रयस्येत्यर्थः । कथंभूतं पुरुषम् । अवहिर-न्तरसंवरणम् । वहिः कार्यं देहादि अन्तरं कारणमज्ञानं ताभ्यां यत् आवरणं तन्न विद्यते यस्य । तयोरसत्त्वादित्यर्थः । इति पूर्वोक्तप्रकारेण नुर्जीवस्य गतिं तत्त्वं त्वदंशलक्षणं विविच्य विचार्य विश्वसिता जातविश्वासा ये कवयो विवेकिनस्ते भवतोंऽशिस्वरूपस्य अङ्घ्रिमु-पासते । अंशिभजनं विना अंशस्योद्धारणासम्भवादित्यर्थः । कथंभूतम-ङ्घ्रिम् । निगमावपनम् । निगमा वेदा आ समन्तात् उप्यन्ते समन्विताः क्रियन्ते यत्र तादृशम् । सर्ववेदार्थत्वात्त्वमेव मुख्यतया सर्वेषां भजनीय इत्यर्थः । निगमो वेदस्तद्रूपे क्षेत्रे आ सम्यक्तया वपनं यस्येति कल्पतरु-त्वादिति चक्रवर्ती । यद्वा । निगमानां वेदानामावपनं क्षेत्रं प्रतिपादन-

सर्वसाधनेभ्यो भक्तेर्गरीयस्त्वं तन्निष्ठानां निस्पृहत्वं च द्योतयन्त्य आहुः—दुरवगमेति ।

(भगवच्चरित्रमहत्तापरेयम्)

दुरवगमात्मतत्त्वनिगमाय तवात्ततनो-
श्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ।
न परिलपन्ति केचिदपवर्गमपीश्वर ते
चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥८॥२२॥

भक्तरञ्जनी

विषयमिति यावत् । यद्वा । आ समन्तादुप्यतेऽत्रेत्यावपनं क्षेत्रं निगमस्य-ज्ञानस्य आवपनं क्षेत्रं तत्त्वेन ज्ञानोत्पादकमित्यर्थः । अत एव न भवः संसारो यस्मात्तम् । भुवीत्यनेन मर्त्यलोके इदमेवोचितमिति सूचितम् ॥७॥२१॥

## पद्यानुवादः

पुरकृतावरणं न तवात्मनः सकलशक्तिधरस्य कुतस्तव ।
इति बुधा नृगतिं सुविविच्य ते भुवि पदं विपदन्तमुपासते ॥७॥

*भाषार्थ*

और देहादिकृत आवरणकी जो बात पूर्वमें कही गई उसकी तो आपके विषयमें शङ्का ही नहीं हो सकती क्योंकि अज्ञानसे संसारको प्राप्त होनेवाले जीवका ही जब वस्तुतः आवरण नहीं है तब आपका कैसे हो सकता है इस अभिप्रायसे कहती हैं—हे भगवन् ! अपने कर्मोंसे उपार्जित इन देव, मनुष्य आदि देहोंमें भोक्तारूपसे वर्तमान बाहर भीतरके आवरणसे रहित इस जीवको समस्त वेद आपका ही अविनाशी अंश बतलाते हैं। क्योंकि समस्त शक्तियोंके आश्रय आप अंशी हैं और यह अंश है। बिना आपके इसका कल्याण नहीं। इस प्रकार जो विवेकी पुरुष हैं वे जीवके स्वरूपका विचार कर इसपर विश्वास करते हुए केवल आपके चरण कमलकी उपासना करते हैं क्योंकि संसारमें यही ज्ञानका उत्पादक एवं मोक्षको देनेवाला है ॥ ७ ॥ २१ ॥

१—पुरं शरीरम् । २—आत्मनः, अंशभूतस्य जीवस्य भक्तस्य । ३—विपदामन्तो यस्मात्तत् ।

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः—हे ईश्वर ! दुरवगमात्मतत्त्वनिगमाय ज्ञानप्रवर्तनाय आत्ततनोः तव चरितमहामृताब्धिपरिवर्त्त परिश्रमणाः केचित् विरलाः अपवर्गमपि न परिलषन्ति । के ते । ये ते तव चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ते । दुरवगमं दुर्ज्ञेयम् । परिश्रमणाः विगतश्रमाः । हंसाः सारग्राहिणो भक्ताः ।

हे ईश्वर ! सर्वाधिकैश्वर्य ! केचित् अनन्यभक्ता अपवर्गं मोक्षसुखमपि परि सर्वतोभावेन एकांशेनापीत्यर्थः न लषन्ति नेच्छन्ति किमुतान्यत् त्रैवर्गिकसुखमिन्द्रादिपदं वा । कथंभूतास्ते । दुःखेनापि अवगन्तुमशक्यं दुरवगमं दुर्ज्ञेयं यत् आत्मतत्त्वम् । यद्वा । आत्मनस्तव तत्त्वं स्वरूपलीलादिमाधुर्यं तस्य निगमाय नितरां प्रापणाय प्रकाशनाय वा आत्ततनोः आविष्कृतमूर्तेस्तव लीलाचरितमेव महामृताब्धिः निरतिशयसुखराशिस्तस्य परिवर्त्तनं श्रवणकीर्त्तनादिना पुनः पुनरावर्त्तनमालोडनं तेन परि गतं श्रमणं श्रमः संसारक्लेशो येषान्ते तथोक्ताः । यथोक्तम् 'यदुत्तमश्लोकगुणानुवर्णनं समस्तसंसारपरिश्रमापहम्' इति । परिरत्र वर्जने । यद्वा । परिवर्तनम् आलोडनं तत्र परिश्रमणाः कृतपरिश्रमा इत्यर्थः । केचित्तु तत्र परिवर्तोऽवगाहनं स्नानपानस्थानीभूतेन श्रवणादिना सेवनं तेनेत्याहुः । अत एव च ते तव चरणकमलसम्बन्धिनो ये हंसाः हंसा इव सारासारविवेकिनो भक्तास्तेषां यत्कुलं समूहस्तस्य सङ्गेन विसृष्टाः त्यक्ता गृहाः स्त्रीपुत्रादिसुखानि यैस्ते तथाभूताः । श्रीमज्जीवगोस्वामिनस्तु हे दुरवगमात्मतत्त्व ! हे निगमाय ! इति संबोधने कृत्वा निगमानां वेदानां अय शुभावहविधे ! यद्वा । आय आश्रय वेदाश्रय इति । तव कीदृशस्य । आत्ता दोर्भ्यामालिङ्गनेन गृहीताः तनवः श्रीरुक्मिणीप्रभृतीनां शरीराणि येन । 'शयानं सह शक्तिभिः' इत्युक्तेः एवम्भूतस्य तवेत्यर्थ इत्याहुः ॥८॥२२॥

## पद्यानुवादः

कृततनोर्निजतत्त्वविबोधने तव कथामृतपानगतक्लमाः ।
अभिलषन्ति न मुक्तिमपीह ते भुवि जना विज[1]नाभिरताश्च ये ॥८॥

---

१—विजने एकान्ते । विजना भक्ता वा ।

विसृष्टगृहा इत्युक्तमतो गृहासक्तान् भक्तिमकुर्वतो जनान्निन्दन्त्य आहुः—त्वदनुपथमिति ।

( अभक्तदुर्गतिपरेयम् )

त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियव-
च्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च ।
न वत रमन्त्यहो असदुपासनयाऽऽत्महनो
यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः ॥६॥२३॥

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः—हे भगवन् ! त्वदनुपथं त्वत्सेवोपयोगि इदं कुलायं शरीरम् आत्मसुहृत्प्रियवत् चरति स्ववशे वर्त्तते । हिते प्रिये आत्मनि परमात्मन त्वयि च उन्मुखे जीवोन्मुखे तथापि अहो बत ये त्वयि न रमन्ति ते असदुपासनया विषयभोगेन आत्महनः आत्मघातिनः । कुतः । यदनुशया यद्विषयवासनायुक्ता कुशरीरभृतः सन्त उरुभये संसारे भ्रमन्ति ।

हे भगवन् ! त्वामनु पन्था यस्य तत त्वदनुपथं त्वत्सेवायोग्यम् इदं कौ पृथिव्यां लीयते इति कुलायं शरीरम् आत्मा च सुहृच्च प्रियश्च तद्वच्चरति । अहङ्कारास्पदत्वात् आत्मवत् । विषयसमर्पकत्वात् सुहृद्वत् । सर्वतः प्रीतिविषयत्वात् प्रियवच्च चरति स्वाधीनतया वर्त्तते इत्यर्थः । तथा च तथापि त्वयि न रमन्ति प्रीतिं न कुर्वन्ति अहो आश्चर्यं बत कष्टे । दुर्लभं मानुष्यं लब्ध्वाऽपि त्वां न भजन्तीत्यस्माकमाश्चर्यं खेदश्च । किञ्च त्वयि आत्मनि न रमन्ते परस्मिन्

भाषार्थ

इसीसे सब साधनोंकी अपेक्षा भक्तिकी श्रेष्ठता और भक्तिमान् भक्तोंकी निःस्पृहता बतलाती हैं—हे ईश्वर ! श्रीकृष्ण ! दुर्ज्ञेय आत्मतत्त्वके प्रकाशनके लिये मूर्तिको धारण करने वाले आपके चरितामृतरूपी महासमुद्रमें स्नान करनेसे जिनका सांसारिक क्लेश दूर हो गया है और जो आपके चरणकमलोंमें हंसके समान रमण करनेवाले भक्तजन हैं उनके सङ्गसे जिनका गृहस्थी जंजाल भी छूट गया है ऐसे कुछ विरले भक्त हे भगवन् ! मोक्षको भी नहीं चाहते हैं ऐसे निःस्पृही वे इन्द्रादि पदको क्या चाहेंगे ।

भक्तरञ्जनी

विषयवर्गे च रमन्तीति सूचनाय परस्मैपदमपि साभिप्रायम्। एतेन विषयोत्कर्षजन्यः स्वार्थनाशो ध्वनितः। कथंभूते त्वयि। उन्मुखे भक्ताननुग्रहीतुमुत्कण्ठिते। प्रिये प्रियसखे। तत्त्वतः। आत्मनि अंशिनि अत एव हिते हितकरे च। एतैर्विशेषणैरंशिनः सर्वथाऽऽनुकूल्येऽप्यंशस्यैव वैमुख्यमित्यतो महान् दुःखोच्छ्वासः अत उक्तमहो बतेति। न रमन्तीत्यत्र हेतुः। असदुपासनया विषयसेवनेन आत्मघातिनः आत्मपतनहेतवः इत्यर्थः। यस्यामसदुपासनायामनुशयो वासना येषां ते यदनुशयाः कुत्सितं शरीरं बिभ्रतीति कुशरीरभृतः गर्दभादियोनिगताः सन्तः उरुभये महाभयङ्करे संसारे भ्रमन्ति नतु कदाचिदपि सुखलेशं प्राप्नुवन्तीत्यर्थः। 'कुलायो नीडमस्त्रियाम्' इत्यमरात् पक्षिनीडाकारत्वात्तद्व्यपदेशः। यद्वा। जीवेश्वरपक्षिणोर्नीडमेव तत्। कुं पृथ्वीं लीयते श्लिष्यतीति कुलायं 'कर्मण्यण्' इति चक्रवर्त्ती। कुलं परम्परा तेन अयते संसरतीति सन्दर्भः। तव पन्थानं भक्तियोगमनुगतं त्वदनुपथं श्रोत्ररसनादिमत्त्वात् त्वच्छ्रवणकीर्तनाद्युपयोगीत्यर्थः ॥६॥२३॥

## पद्यानुवादः

**त्वदुपयोगि शरीरमिदं प्रभो चरति निघ्न[१]तया सुहृदादिवत्।**
**असदुपासनयाऽत्र[२] रता न ते तव तनौ बत नौरिव तारिणी ॥६॥**

*भाषार्थ*

पूर्वमें घरकी आसक्तिका त्याग बतलाया इसलिये जो घरमें आसक्त होकर भक्ति नहीं करते उन्हें श्रुतियाँ कोसती हैं—

हे भगवन्! आपकी सेवाके योग्य यह मनुष्य शरीर, आत्मा, सुहृत् और प्रियके समान् स्वाधीन है और जीवोंके हितकारक प्रिय आत्मा आप भी इनके उद्धारके लिये उन्मुख (उत्कण्ठित) हैं। तो भी बड़े दुःखकी बात है कि विषयके सेवनसे स्वात्माका हनन करनेवाले ये पामर जीव आपमें प्रेम नहीं करते किन्तु विषयमें ही निरत रहते हैं। जिन विषयोंकी वासना करनेवाले जीव कूकर-सूकर आदि निन्दित योनियोंको धारण करते हुए महाभयंकर इस संसारमें ही भ्रमण करते हैं आपको कभी प्राप्त नहीं होते ॥६॥२३॥

---

१—स्वाधीनतया। २—विषयवर्गे। नौरिव तारिणी या तत्र तव तनौ ते न रता अत आत्मघातिन इत्यर्थः।

इदानीमात्मप्राप्तौ ध्यानमङ्गत्वेनोपदिशन्त्य आहुः—निभृतेति ।

( गोपीत्वप्रार्थनापरेयम् )

निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यन्
मुनय उपासते तदरयोऽपि ययुः स्मरणात् ।
स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो
वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः ॥१०॥२४॥

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः—हे भगवन्! मुनयः हृदि यत् तत्त्वं उपासते अरयोऽपि स्मरणात् तत् ययुः । स्त्रियः गोप्योऽपि तदेव ययुः । अतः समदृशस्ते वयमपि समाः तुल्या एव कृपाविषये । कथंभूताः । ते अङ्घ्रिसरोजं सुष्ठु दधतीति तथाभूताः । कथंभूता मुनयः । निभृतमरुन्मनोऽक्षदृढयोगयुजः । कथंभूताः स्त्रियः । उरगेन्द्रभोगभुजदण्डविषक्तधियः । मरुत् प्राणः । अक्षाणि इन्द्रियाणि ।

हे भगवन्! मुनयो हृदि यत् भगवत्स्वरूपमुपासते ध्यायन्ति तत् अरयः शिशुपालादयोऽपि वैरानुबन्धेन तव स्मरणात् ययुः प्रापुः । स्त्रियः गोपिकाश्च कामतस्तदेव तत्त्वं ययुः । अतो वयं श्रुत्यभिमानिन्यो देवता अपि समदृशस्ते समा तुल्यकृपाविषया एव । यथा मुनयोऽरयो गोप्यश्च तव कृपाविषये समाः तथा वयं श्रुतयोऽपि तव समा एव त्वत्संयोगं प्राप्तुं योग्या एवेत्यर्थः । यतः तेऽङ्घ्रिसरोजं सुष्ठु दधति धारयन्ति चिन्तयन्तीति तथाभूताः वयम् । कथंभूता मुनयः । निभृतानि निरुद्धानि मरुत् प्राणः मनोऽन्तःकरणम् अक्षाणि इन्द्रियाणि च यैस्ते । अत एव दृढं योगं युञ्जन्तीति ते च ते च तथाभूताः । बहुव्रीहिगर्भितकर्मधारयः । कथंभूताः स्त्रियः । उरगेन्द्रः शेषः तस्य भोगवत् देहवत् वर्तुलयोः कोमलयोश्च भुजदण्डयोर्विषक्ता रागेणासक्ता धीर्यासां तास्तथाभूताः । सुधेति 'डुधाञ्' धारण-पोषणयोः इत्यस्मात् साधु । यद्वा । अङ्घ्रिसरोजमेव सुधा भोग्यं वस्तु यासाम् । तवाङ्घ्रिसरोजमेव अस्माकं प्रकाश्यत्वेन भोग्यमित्यर्थः । अत्र सन्दर्भः । अरयोऽपि ययुरतः कैवल्यं तावन्न दुर्लभं किन्तु तव चरणरतिरेव दुर्लभा इत्यत्र वयमेव प्रमाणं यतो ब्रह्मोपासनामवहेलयन्त्यस्त्वच्चरणरत्यर्थं श्रुतिरूपमपहाय व्रजे गोपाङ्गनाभावमासादिता इत्याहुः—स्त्रिय इति । वयं

भक्तरञ्जनी

श्रुतयोऽपि ते भुजदण्डयोः विषक्तधियः सत्यः स्त्रियो भूत्वा तेऽङ्घ्रिसरोजं सुष्ठु दधतीति तथाभूताः जाताः। ते इत्युभयत्रान्वेति । चक्रवर्त्ती तु अत्र चत्वारो गणाः वर्णिताः पूर्वार्द्धगतौ मुनिगणदैत्यगणौ यथा समप्राप्यौ तथैवोत्तरार्द्धगतौ गोपीगणश्रुतिगणौ समप्राप्यौ इति पृथक् पृथगपि-शब्दाभ्याम्मवगम्यते। अत्र बृहद्वामनोक्त इतिहासोऽपि द्रष्टव्यः तथाहि—

ब्रह्मानन्दमयो लोको व्यापी वैकुण्ठसंज्ञितः।
तल्लोकवासी तत्रस्थैः स्तुतो वेदैः परात्परः॥ १॥
चिरं स्तुत्या ततस्तुष्टः परोक्षं प्राह तान्गिरा।
तुष्टोऽस्मि ब्रूत भो प्राज्ञा वरं यन्मनसेप्सितम्॥ २॥

श्रुतय ऊचुः

कन्दर्पकोटिलावण्ये त्वयि दृष्टे मनांसि नः।
कामिनीभावमासाद्य स्मरक्षुब्धा न संशयः॥ ३॥
यथा त्वल्लोकवासिन्यः कामतत्त्वेन गोपिकाः।
भजन्ति रमणं मत्वा चिकीर्षाऽजनि नस्तथा॥ ४॥

श्रीभगवानुवाच

दुर्लभो दुर्घटश्चैव युष्माकं स मनोरथः।
मयाऽनुमोदितः सम्यक् सत्यो भवितुमर्हति॥ ५॥
आगामिनि विरिञ्चौ तु जाते सृष्ट्यर्थमुद्यते।
कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ॥ ६॥
पृथिव्यां भारते क्षेत्रे माथुरे मम मण्डले।
वृन्दावने भविष्यामि प्रेयान्वो रासमण्डले॥ ७॥
जारधर्मेण सुस्नेहं सुदृढं सर्वतोऽधिकम्।
मयि सम्प्राप्य सर्वेऽपि कृतकृत्या भविष्यथ॥ ८॥

ब्रह्मोवाच

श्रुत्वैतच्चिन्तयन्त्यस्ता रूपं भगवतश्चिरम्।
उक्तकालं समासाद्य गोप्यो भूत्वा हरिं गताः॥ ९॥ इति।

वस्तुतस्तु ते इति त्रिष्वप्यन्वेति। ते भुजदण्डविषक्तधियः। तेऽङ्घ्रिसरोजसुधाः अत एव ते स्त्रियो भोग्या जाता इति । ते तादृशभुजदण्डविषक्तधिय इत्यनेन श्रुतीनां सहेतुको भगवत्यनुरागः। तेऽङ्घ्रिसरोजसुधा इत्यनेन भगवत्प्राप्त्युपायः। ते स्त्रियो भोग्या गोपिका जाता इत्यनेन अपवर्गाधिकभगवद्भोग्यत्वरूपफलप्राप्तिश्च सूचितेति॥ १०॥ २४॥

भक्तिद्वेषादिना त्वत्पराणां विषमस्वभावानामपि सर्वेषां त्वत्प्राप्तिरूपमेकमेव फलं भवतीत्यतस्तव तत्त्वं दुर्ज्ञेयमिति वदन्त्यो ज्ञानं निरस्य भक्तिमेव दृढीकुर्वन्ति—क इहेति ।

( अनिर्वचनपरेयम् )

क इह नु वेद बताऽवरजन्मलयोऽग्रसरं
यत उदगादृषिर्यमनु देवगणा उभये ।
तर्हि न सन्न चाऽसदुभयं न च कालजवः
किमपि न तत्र शास्त्रमवकृष्य शयीत यदा ॥११॥२५॥

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः—हे भगवन् ! यतः ऋषिर्ब्रह्मा उदगात्, यं ब्रह्माणम् अनु उभये देवगणा उभयेन्द्रियाधिष्ठातार उदगुः तमग्रसरं पूर्वसिद्धं त्वाम् इह अवरजन्मलयः आधुनिकजन्ममरणवान् को नु वेद न कोऽपि । बतेति विस्मये । यदा तु प्रलये सर्वमवकृष्य भवान् शयीत तर्हि सत् स्थूलं न, असत् सूक्ष्मं च न, उभयं ताभ्यामारब्धं शरीरं न, कालजवश्च न, किं बहुना तत्र किमपि नासीत् अतस्तदाऽपि को वेदेति ।

पद्यानुवादः

यदभजन्दृढयोगयुजो हरे तदरयोऽपि ययुः स्मरणात्तव ।
भुजविषक्तधियोऽपि वयं पदे तव सुधावसुधाः किमु मा समाः ॥१०॥

भाषार्थ

भगवत्प्राप्तिमें ध्यान भी भक्तिका अंग है इसका उपदेश करती हुई गोपीभावकी प्रार्थना करती हैं—हे भगवन् ! प्राण, मन और इन्द्रियोंको रोककर दृढ़योग करनेवाले योगीजन हृदयमें जिस भगवत्स्वरूपका ध्यान करते हैं उसी तत्त्वको शिशुपालादिक शत्रु भी आपके स्मरणसे प्राप्त हो गये । और सर्पराज शेषके समान विशाल एवं कोमल आपके भुजदण्डमें आसक्त बुद्धिवाली गोपियोंने भी उसी तत्त्वको प्राप्त कर लिया । तो हे भगवन् ! समदर्शी आपकी कृपाके हम भी समान पात्र हैं अर्थात् हमें भी उसका स्पर्श-सुख मिलना चाहिये क्योंकि हम भी आपके चरणकमलके माधुर्यका वर्णन कर उसीका चिन्तन करती रहती हैं ॥ १०॥२४॥

१—विषक्तधियः गोप्यः । वयमपि तथाभूताः तव पदे स्थिता इति शेषः । कुतः । सुधा॰पदगतसुधैव वसु तत् दधति चिन्तयन्तीति तथा किमु न समा अपि तु समा एवेत्यर्थः ।

भक्तरञ्जनी

वत अहो हे भगवन्! इह जगति अग्रसरं पूर्वतो वर्तमानं त्वाम् अवरजन्मलयः आधुनिकजन्ममरणभागी को नु पुमान् वेद न कोऽपीत्यर्थः। नु इति सभ्रूभङ्गं वितर्के। यतः त्वत्तः ऋषिर्वेदः प्रथममुदगात् किञ्चित्तत्त्वज्ञापकः प्रादुरभूत्। यं वेदमनु उभये देवगणा उभयेन्द्रियाधिष्ठातारः। यद्वा। इन्द्रियाधिष्ठातारः दिग्वाताकर्कादयः। ब्रह्मलोकाद्यधिष्ठातारो ब्रह्मादयश्च उभये उद्‌गुः। तस्मात्तेभ्योऽप्यवरजन्मलयस्तु जीवः सुतरामेव न वेदेत्यर्थः। यदा तु प्रलये सर्वमवकृष्य उपसंहृत्य भवान् शयीत अशेत। लङर्थे लिङ्। तर्हि तदा सत् स्थूलमाकाशादि नासीत्। असत् सूक्ष्मं महदादि च नासीत्। उभयं सदसद्भ्यामारब्धं शरीरं च नासीत्। कालजवः गुणक्षोभकारणभूता कालचेष्टा च नासीत्। शास्त्रं ज्ञापकं शास्त्रं च नासीत्। किं बहुना तत्र तदा किमपि इन्द्रियप्राणादिकमपि नासीत् कुतो ज्ञानमित्यर्थः। सृष्टिकाले देहाद्युपाधिकृतबहुव्यवधाने सत्यपि ज्ञापकस्य शास्त्रस्य साधनसमूहस्य च संभवात् यत्किञ्चित्तत्त्वज्ञानं कदाचित्कस्यचिद्भवेदपि। प्रलयकाले तु बहुतरव्यवधानाभावेऽपि शास्त्रस्य साधनसमूहस्य चाभावान्न किञ्चिन्मात्रमपि तत्त्वज्ञानं संभवेदतो दुर्घटज्ञानाग्रहं त्यक्त्वा त्वद्भक्तिरेव कर्तुं युज्यते इति फलितम्। यद्वा। यदा प्रलये सर्वं प्रपञ्चमवकृष्य भवान् शयीत तर्हि सत् आकाशादि किमपि अन्यद्वस्तु नासीत्। सृष्टेरादौ तु यतः ऋषिर्वेदः ब्रह्मा वा उदगात्। यमनु ब्रह्मानन्तरम् उभये प्रवृत्तिनिवृत्तिनिष्ठा देवा उद्‌गुः। तं त्वामिह जगति को नु वेद न कोऽपीत्यन्वयः। नहि पितुरुत्पत्तिं पुत्रो जानातीत्यर्थः। कथंभूतं त्वाम्। अग्रसरं ब्रह्मादिसर्वजगत्कारणत्वेन सृष्टेः पूर्वमेव सिद्धम्। प्रवृत्तिनिष्ठा मरीच्यादयः। निवृत्तिनिष्ठाः सनकादयश्च ॥११॥२५॥

## पद्यानुवादः

क इह वेद भवन्तमनीश्वरो[१] विधिरथोभयदेवगणा यतः।
तदशयिष्ट विकृष्य यदेतरत् भुवि न ते[२] विनतेश स सेव्यताम् ॥११॥

१—अनीश्वरो जीवः। २—हे विनतेश यत् यदा तत् सर्वमपि विकृष्य अशयिष्ट तदा ते रूपात् इतरत् अन्यत् किमपि न किन्तु भवानेव अतः स एव सेव्यतामित्यन्वयः।

किञ्चोपदेशकर्तॄणामाचार्याणामपि भ्रमबाहुल्यात्तव ज्ञानं दुष्करमेवा-तस्तत्तन्मतानि प्रदर्श्य खण्डयन्त्यो निर्दुष्टो भक्तिमार्ग एवाश्रयणीय इत्याहुः—जनिमसत इति ।

( पञ्चवादिमतखण्डनपरेयम् )

जनिमसतः सतो मृतिमुतात्मनि ये च भिदां
विपणमृतं स्मरन्त्युपदिशन्ति त आरुपितैः ।
त्रिगुणमयः पुमानिति भिदा यदबोधकृता
त्वयि न ततः परत्र स भवेदवबोधरसे ॥१२॥२६॥

---

भक्तरञ्जनी

संक्षिप्तसार्थान्वय :—असतो जनिं काणादाः स्मरन्ति वदन्ति । असत एव ब्रह्मत्वस्य जनिं पातञ्जलाः स्मरन्ति । सतः सत्यस्यैव दुःखस्य मृतिं नैयायिकाः स्मरन्ति । उत अपि ये च सांख्यादयः आत्मनि भिदां स्मरन्ति । ये च मीमांसका विपणं कर्मफलव्यवहारम् ऋतं सत्यं स्मरन्ति ते सर्वे आरोपितैर्भ्रमैरेव उपदिशन्ति न तत्त्व-दृष्ट्या । त्रिगुणमयः पुमानिति हेतुना भिदा पञ्चमतभेदः यस्य अबोधकृता

भाषार्थ

और जब कि विषम स्वभाववाले मुनि शत्रुओंको भी आप समरूपसे प्राप्त होते हैं तब तो आपके रहस्यको जानना और भी कठिन है इसलिये भक्तिको ही दृढ़ करती हैं—हे भगवन् ! सर्वप्रथम आपसे वेद एवं ब्रह्मा उत्पन्न हुए । उनके पीछे निवृत्ति-मार्गमें निष्ठ सनकादिक और प्रवृत्ति-मार्गमें निष्ठ मरीच्यादि दो प्रकारके देवगण हुए । फिर उनके पीछे मनुष्य आदि हुए । तो जैसे पिताकी उत्पत्तिको पुत्र नहीं जानता उसी प्रकार 'कारण रूपसे सबके पहले वर्तमान आपको भी पश्चात् जन्म-मरणको प्राप्त करनेवाला आधुनिक कौन प्राणी जान सकता है कोई नहीं । यह सृष्टि-कालकी बात कही और जब कि प्रलयमें आप सबको अपनेमें लीन करके शयन करते हैं तब हे भगवन् ! उस समय न स्थूल आकाशादि हैं न सूक्ष्म महदादि हैं न इन दोनोंसे रचित शरीर हैं न गुण क्षोभक काल है और न ज्ञापक शास्त्र ही है अधिक क्या कहें उस समय इन्द्रिय, प्राण आदि कुछ भी नहीं हैं तो साधन न होनेसे आपका ज्ञान कैसे हो सकता है ! अतः ज्ञानका आग्रह छोड़कर केवल आपकी भक्ति ही करना श्रेयस्कर है हम सब इसीको मुख्य सिद्धान्त बनाती हैं ॥११॥२५॥

भक्तरञ्जनी

तस्मिन् त्वयि विज्ञाते सति जीवानां सोऽबोधस्तन्मूलो भेदश्च न भवेत् न भवति। कथंभूते त्वयि। ततः अबोधात्परत्र। पुनः अवबोधरसे च।

अत्र काणादपातञ्जलनैयायिकसांख्यमीमांसकानां पञ्चानामपि मतानि प्रदर्श्य षष्ठेन वेदान्तशास्त्रेण तानि खण्डयन्ति। तथाहि। काणादा हि उत्पत्तेः पूर्वं कार्यमात्रस्य प्रागभावोऽस्ति स च तत्तत्प्रागभावस्तत्तत्कार्ये निमित्तकारणं उत्पन्ने कार्ये प्रागभावनाशः एवमसत उत्पत्तेः प्रागविद्यमानस्य जगतः जनिमुत्पत्तिं स्मरन्ति वदन्ति। तेषां मते 'सदेव सौम्येदमग्र आसीत्' इति श्रुतिविरोधः[1]। पातञ्जलाश्च यथा ताम्रादिकमसुवर्णमपि रसायनप्रभावात्सुवर्णं सम्पद्यते तथैव जीवेऽसत एव ब्रह्मत्वस्य योगादिना जनिं वदन्ति अब्रह्मभूतोऽपि जीवो योगप्रभावाद् ब्रह्म सम्पद्यत इत्यर्थः। तेषां मते 'ब्रह्मैव सन् ब्रह्माप्येति' इत्यादि श्रुतिविरोधः[2] जन्यब्रह्मत्वस्य नश्वरत्वापत्तिश्च। एवमसतो जनि-

भाषार्थ

दूसरी बात यह है कि हे भगवन्! वादियोंमें भी परस्पर भ्रमबाहुल्य होनेसे आपका ज्ञान और भी दुष्कर है जैसे कि काणाद अर्थात् वैशेषिक सप्त पदार्थवादी नवीन तार्किक ये जगत्की उत्पत्तिके प्रति प्रागभावको कारण मानकर असत्की उत्पत्ति मानते हैं। इनका मत 'सदेव सौम्येदम्' इस श्रुतिसे विरुद्ध होता है। और पातञ्जल मतावलम्बी कुछ योगी जैसे ताम्र सुवर्ण न होता हुआ भी रसायनके प्रभावसे सुवर्ण बन जाता है उसी प्रकार जीव ब्रह्म न होता हुआ भी साधन-बलसे ब्रह्मत्वको प्राप्त होता है ऐसा मानते हैं। इनका मत 'ब्रह्मैव सन्' इस श्रुतिसे विरुद्ध होता है और गौतमीय अर्थात् षोडश पदार्थवादी प्राचीन नैयायिक ये इक्कीस प्रकार के दुःखको सत्य मानकर ज्ञानसे उसका नाश ही मोक्ष है ऐसा मानते हैं। इसका मत 'नाऽभावो विद्यते सतः' 'अनीशया शोचति' इस गीता और श्रुतिसे विरुद्ध होता है। और सांख्यवादी आत्मा में भेद तथा कोई अन्य

---

१. हे सौम्य श्वेतकेतो! अग्रे जगदुत्पत्तेः पूर्वम् इदं नामरूपात्मकं जगत् सदेव सूक्ष्मरूपेण सत्तादात्म्यात् सदेवासीत् अभावाद्भावोत्पत्ते रसंभवाच्च। तेनासत्कार्यवादिनः काणादा वैशेषिका निरस्ताः।

२. ब्रह्मैव सन् इत्यज्ञानस्वरूपस्यैवाज्ञानेनावरणमात्रं तस्माज्ज्ञानात्पूर्वमपि सदेव ब्रह्म आवरणापगमे स्वस्वरूपं ब्रह्मैव प्राप्नोतीति तेन ब्रह्मत्वासत्त्ववादिनः पातञ्जला निरस्ताः।

भक्तरञ्जनी

मित्यनेन पक्षद्वयमुद्भावितम् । नैयायिकाश्च सतो मृतिं स्मरन्ति । सत एकविंशतिप्रकारकस्य दुःखस्य सत्यस्यैव मृतिं ज्ञानान्नाशं मोक्षं वदन्ति । तेषां मते 'नाभावो विद्यते सतः । 'अनीशया शोचति मुह्यमानः इति गीताश्रुतिविरोधः[1] । एकविंशतिप्रकारं दुखं च--षडिन्द्रियाणि, षडिन्द्रिय-विषयाः, क्षुत्पिपासे, शोकमोहौ, जरामृत्यू षडूर्मयः[2] । यद्वा । षड् बुद्धयः शरीरं सुखं दुःखञ्चेति । उत अपि ये च सांख्यादयः आत्मनि भिदां भेदं वदन्ति । तत्र केचित् जीवानामन्योन्यभेदम् । जीवब्रह्मणोर्भेदम् । जीवज-डयोर्भेदम् । ब्रह्मजडयोर्भेदम् । जडानां परस्परभेदं चेति पञ्चधा भेदं वदन्ति । तेषां मते 'एको देवः सर्वभूतेषु गूढः' इत्यादिश्रुतिविरोधः[3] । ये च मीमां-सका विपणं व्यवहारं कर्मफलं स्वर्गाद्येव ऋतं सत्यं परमपुरुषार्थञ्च स्मरन्ति वदन्ति । 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इत्युक्तेः । तेषां मते 'नेह नानाऽस्ति किञ्चन' 'तद्यथेह कर्मचितो लोकः क्षीयते

भाषार्थ

जीवोंका परस्पर भेद, जीव ईश्वरका भेद, जीव जड़का भेद, ब्रह्म जड़का भेद और जड़-जड़का भेद इस रीतिसे पाँच प्रकारका भेद मानते हैं । इनका मत 'एको देवः' 'एकमेवाद्वितीयम्' इत्यादि श्रुतिसे विरुद्ध होता है । और मीमांसक 'अक्षय्यं ह वै' इसके बलसे कर्म-फल स्वर्ग आदिको नित्य मानते हैं । इनका मत 'कर्मचितो लोकः क्षीयते' इस श्रुतिसे विरुद्ध होता है । इस प्रकार ये पाँचों वादी स्वप्न देखते हुए भ्रान्तिसे ही अपने शिष्योंको उपदेश करते हैं तत्त्व-दृष्टिसे नहीं । हाँ यदि जीव त्रिगुणमय हो तो यह पाँच प्रकारका मत-भेद सङ्गत हो सकता है । किन्तु ऐसा है नहीं जीव वस्तुतः निर्गुण है तो जिस भगवान्का ज्ञान न होनेसे इन पाँच प्रकारके भेदोंकी कल्पना की गई है उसी अज्ञानसे परे ज्ञान-रस-पूर्ण भगवान्को जान लेनेपर फिर जीवोंको न तो अज्ञान होता है और न तन्मूलक इस प्रकार भ्रम ही होता है । अतः सर्वतोभावेन भगवानका ही आश्रय लेना चाहिये यह हमारा सिद्धान्त है ॥ १२ ॥ २६ ॥

---

१. अनीशा माया तया मुह्यमानः शोचति दुःखी भवति इति मायिकमज्ञान-कल्पितमेव दुःखं न वस्तुतः सदिति तेन दुःखसत्यत्ववादिनो गौतमीया निरस्ताः ।

२. बुभुक्षा च पिपासा च प्राणस्य, मनसस्तथा ।
शोकमोहौ, शरीरस्य जरामृत्यू षडूर्मयः ॥

३. वस्तुत एक एवात्मा जीवात्मपरमात्मभेदजीवपरस्परभेदादिकं च घटाकाश-मठाकाशादिभेदवदुपाधिकल्पितमेव न सत् तेन भेदवादिनो निरीश्वरसांख्यादयो निरस्ताः ।

भक्तरञ्जनी

एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयते' इत्यादि श्रुतिविरोधः[१] एवं ये ते एते पञ्चापि मतप्रवर्तका अन्धपरम्परया आरोपितैर्भ्रमैरेवोपदिशन्ति न तत्त्वदृष्ट्येति प्राञ्चः यतः पुरुषस्य जीवस्य त्रिगुणमयत्वे सर्वमिदं सङ्गच्छेत न तु तदस्ति किन्तु स निर्गुण एवेति द्योतयन्त्य आहुः--त्रिगुणमयः पुमान् जीव इति हेतुना या भिदा पञ्चमतभेदः सा यत् यस्मात् अबोधकृता अविद्याशक्तिकल्पिता न वस्तुतः। सा च जीवात्मन्येव प्रभवति न त्वयी-त्याहुः– सः अबोधोऽविद्याशक्तिः त्वयि न भवेत् न प्रभवेत्। जीवस्यैवा-ऽविद्ययाऽऽवरणं घटते न तु तवेत्यर्थः। तत्र हेतुद्वयम् ततः अबोधात् अविद्याशक्तेः परत्र परेऽसङ्गे। तव मायातीतत्त्वादविद्यायाश्च माया-

## पद्यानुवादः

काणादा असतो जनिं, विधिवलाद् ब्रह्मेति पातञ्जला
जीवस्ताभ्रवदत्र, दुःखविरतिं मोक्षं च नैयायिकाः।
सांख्या आत्मनि भेदमाहुरिति वा भाट्टाः फले नित्यतां
पञ्चोक्ताः कुमतप्रवर्तकतया भ्रान्ता इमे वादिनः॥
गुणमये पुरुषे मतसङ्गतिर्न तु तथा त्वदबोधकृता भिदा
त्वयि परे विदिते तु कुतो भ्रमो भजनतो जनतोत्तमभावतः॥१२॥

---

१. अक्षय्यमिति श्रुतेः कर्मफलस्य स्वर्गादेश्चिरस्थायित्वश्रवणेऽपि क्षीयते इत्यग्रिमश्रुत्या तस्य नाशाङ्गीकारः, सृष्टिप्रलययोः स्वीकारश्च तेन कर्मफलस्य सत्यत्ववादिनो मीमांसका निरस्ताः।

२. अयं भावः—त्रिगुणमये हि जीवे गुणपरिणामरूपादृष्टवशादेव असतोऽपि वस्तुन उत्पत्तिरिति काणादमतं सङ्गच्छेत। वस्तुतस्त्रिगुणमये हि जीवे ब्रह्मत्वासत्त्वसंभवात्पातञ्जलमपि सङ्गच्छेत। तथा वस्तुतस्त्रिगुणमयस्यैव एकविंशतिदुःखसद्भाव इति गौतमीयमतं सङ्गच्छेत। एवं सांख्यमतेऽपि प्रकृतिगुणसन्निधानादेव पुरुषस्य कर्तृत्वं गुणपरिणामरूपादृष्टवशादेव पुरुषस्य नानात्वसाध्यसिद्धिरिति तस्य त्रिगुणमयत्वे एव तन्मतसङ्गतिः। तदुक्तं तैरेव 'तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्। गुणकर्तृत्वे न तथा कर्तेव भवत्युदासीनः' इति। एवं त्रिगुणमयस्यैव जीवस्य वास्तवकर्मफलभोगः संभवति न निर्गुणस्येति तस्य त्रिगुणमयत्वे सत्येव मीमांसकमतसङ्गतिरिति।

तदेवम् असन्नोत्पद्यते त्रिगुणमयः पुरुषो न भवति इति च सिद्धं ततश्च जगत् जीवश्च ब्रह्मणः पृथङ्न स्त इत्युक्तं भवति। ननु कथं तर्हि तयोः पृथक् सत्त्वेन प्रतीतिरत आहुः—सदिवेति।

( सृष्टिसत्यासत्यत्वपरेयम् )

सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात्
सदभिमृशन्त्यशेषमिदमात्मतयाऽऽत्मविदः।
न हि विकृतिं त्यजन्ति कनकस्य तदात्मतया
स्वकृतमनुप्रविष्टमिदमात्मतयावसितम् ॥१३॥२७॥

भक्तरञ्जनी

वृत्तित्वात्त्वन्नियम्यत्वाच्चेति भावः। कुतः। अवबोधरसे ज्ञानघने। यद्वा। भिदा पञ्चमतभिदा यस्य तव अबोधकृता अज्ञानकृता तस्मिन् त्वयि विज्ञाते सति जीवानां सोऽबोधस्तन्मूलो वादभेदश्च न भवेन्न संभवतीत्यन्वयः। कथंभूते त्वयि। ततोऽबोधात्परत्र। पुनः। अवबोधरसे च। स्मरन्ति इत्यत्र वदन्तीति वक्तुमुचितेऽपि स्मरन्तीत्युक्त्या स्वाप्निकमिथ्यापदार्थस्मृतिवत् तेषां शास्त्रस्मृतिरपि अतात्त्विकी भ्रान्तिमूलैवेति सूचितम्। आरुपितैरित्यत्र गुणाभावेन च तेषूपदेशकेषु तदुपदेश्येषु च गुणाभावादन्धपरम्परान्यायेनोभयोरेव पातः संभवेदतः कुतर्कादि विहाय भगवानेवाश्रयणीय इति ध्वनितम्। अद्वैतप्रतिपादनपरेयं वा ॥ १२ ॥ २६ ॥

संक्षिप्तसार्थान्वयः—हे भगवन्! आमनुजात् जीवमभिव्याप्य त्रिवृत् त्रिगुणात्मकम् अशेषम् इदं जगत् मनः मनःकल्पितम् असदपि त्वयि अधिष्ठाने सति सदिव विभाति न वस्तुतः सत्। आत्मविदस्तु इदम् अशेषम् आत्मतया सत् अभिमृशन्ति जानन्ति। हि यतः कनकस्य विकृतिं कुण्डलादिकं कनकार्थिनो न त्यजन्ति। किन्तु तदात्मतया कनकरूपतया गृह्णन्त्येव अतः स्वेन भगवता कृतमिदं विश्वं तत्र अनुप्रविष्टं जीवरूपं च आत्मतयैव अवसितं निश्चितम्।

हे भगवन्! मनः मनोमात्रविलसितमिदं त्रिवृत् त्रिभिर्गुणैर्वर्तते प्रवर्तते इति त्रिवृत् त्रिगुणात्मकं जगत् असदेव त्वयि अधिष्ठाने सति सदिव विभाति अधिष्ठानसत्तया सद्वत्प्रतीयते न वस्तुतः सदित्यर्थः। न केवलमिदमेव किन्तु आमनुजात् मनुजो जीवस्तमभिव्याप्येति जीवस्यापि पृथक्सत्त्वप्रतीतिर्मनोमात्रविलसितेत्यर्थः। नन्वात्मविदामपि विश्वं सदेव स्फुरति

भक्तरञ्जनी

अतः कथमसत्तत्राहुः—आत्मविदो ज्ञानिनस्तु। यद्वा। आत्मानं परमात्मानं श्रीकृष्णं विदन्तीति आत्मविदो भक्तास्तु अशेषं सम्पूर्णमिदं भोक्तृभोग्यात्मकं जगत् आत्मतया परमात्मस्वरूपतया सत् अभिमृशन्ति सदिति जानन्ति। आत्मकार्यत्वान्न ततः पृथगिति निश्चिन्वन्तीत्यर्थः। युक्तं चैतत्। हि यतः कनकस्य विकृतिं कुण्डलादिकं कनकार्थिनो न त्यजन्ति अपितु तदात्मतया कनकरूपतया तत् गृह्णन्त्येवेति शेषः। अतः स्वकृतं स्वेन सृष्टमिदं जगत् तदनु प्रविष्टं जीवरूपं च आत्मतया तत्स्वरूपतयैव अवसितं निश्चितं व्यासादिभिः। अनेन कथं तयोः सत्त्वेन प्रतीतिरिति समाहितम्। श्रीवल्लभाचार्यास्तु स्वेनैव कृतम् आत्मोपादानकम्। 'स आत्मानं स्वयमकुरुतेति' श्रुतेः। 'स्वेनैव चानुप्रविष्टं 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेः। अतो जगत् तत्र स्थिता च सामग्री भगवानिति। इदं सर्वमात्मतयैवावसितं ततः सर्वस्यापि ब्रह्मत्वात्कस्य दोषः कुत्र भवेत् मतान्तर एव दोषाणां दोषत्वं ब्रह्मवादे तु ब्रह्मत्वमेवेति सर्वमविरुद्धम्। 'जीवानां ब्रह्मरूपत्वाद्दोषा अपि च मानसाः। जगच्च सकलं ब्रह्म ततो दोषः कथं हरौ' इत्याहुः ॥१३॥२७॥

## पद्यानुवादः

**असदपि त्वयि सज्जगदाजनात्सदभियन्ति तदात्मतया विदः।**
**कनककुण्डलवद् भगवन्नतस्तव सतो वशतो मितमात्मना॥ १३॥**

भाषार्थ

अच्छा यदि असत्की उत्पत्ति नहीं और जीव भी त्रिगुणमय नहीं तो जगत् और जीव भी पृथक् नहीं हो सकते तब फिर इन दोनोंकी सत्य रूपसे प्रतीति क्यों होती है? सुनो! श्रुतियाँ इसका उत्तर देती हैं—हे भगवन्! जीवको लेकर त्रिगुणात्मक यह सभी जगत् मनसे कल्पित है अतः स्वयं असत् होता हुआ भी आप इसके आधार हैं इसलिये सत्यकी तरह प्रतीत होता है वस्तुतः सत् नहीं है। यदि यह कहो कि ज्ञानी पुरुष इसको सत्य देखते हैं इसलिये सत् है तो यह भी युक्ति ठीक नहीं, क्योंकि ज्ञानी पुरुष तो इस सभी जगत्को आत्माका कार्य जानकर आत्मरूपसे सत्य मानते हैं वैसे नहीं और यह उचित भी है, लोकमें देखा जाता है कि कनकार्थी सुवर्णकी विकृति कटक, कुण्डल आदिको सुवर्ण रूपसे ही ग्रहण करता है त्यागता नहीं। अतः यह जगत् परमात्मासे रचित है और वह ही इसमें अंश रूपसे प्रविष्ट है इसलिये यह आत्म-स्वरूप ही है ऐसा शास्त्रोंमें व्यासादिकने निश्चित किया है ॥१३॥२७॥

ननु सत्यज्ञानादिस्वरूपेणैव तस्य ज्ञानं सुकरं किं भक्त्येति जल्पतां दार्शनिकानामपि बन्धनं सूचयन्त्यः पुनर्भजनोत्कर्षमेव द्योतयन्ति–तवेति ।

( अभक्तदार्शनिकबन्धनपरेयम् )

तव परि ये चरन्त्यखिलसत्त्वनिकेततया
त उत पदाऽऽक्रमन्त्यविगणय्य शिरो निर्ऋतेः ।
परिवयसे पशूनिव गिरा विबुधानपि तां-
स्त्वयि कृतसौहृदाः खलु पुनन्ति न ये विमुखाः ॥१४॥२८॥

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः—हे भगवन् ! अखिलसत्त्वनिकेततया सकलजीवनिवासतया ये तव ये त्वां परिचरन्ति सेवन्ते ते उत ते एव अविगणय्य तुच्छीकृत्य निर्ऋतेर्मृत्योः शिरः पदा आक्रमन्ति । ये विमुखाः अभक्ताः तान् विबुधान् विशिष्टान् बुधान् दार्शनिकानपि गिरा वेदलक्षणया पशूनिव त्वं परिवयसे बध्नासि । अतः खलु निश्चितमेतत् ये त्वयि कृतसौहृदाः ते सर्वं लोकमेव पुनन्ति किमुत आत्मानं अकृतसौहृदास्तु आत्मानमेव न, कुतो लोकम् ।

हे भगवन् ! तव भवतः, अखिलसत्त्वनिकेततया । अखिलसत्त्वान्येव निकेतो यस्य तस्य भावस्तत्ता तया । सर्वप्राणिनिवासितया ये त्वां परिचरन्ति सेवन्ते ते उत ते एव अविगणय्य अनादृत्य निर्ऋतेर्मृत्योः शिरः पदा पादेन आक्रमन्ति मर्दयन्ति मृत्युं जयन्तीत्यर्थः । ये पुनर्विमुखाः त्वदभक्ताः तान् विशिष्टान् बुधान् दार्शनिकानपि त्वं परिवयसे सर्वतो बध्नासि । कया । त्वं ब्राह्मणः एवं कुरु, त्वं क्षत्रियः एवं कुरु इत्येवं गिरा वेदलक्षणया वाचा । अतः खलु एष निश्चितसिद्धान्तः त्वयि ये कृतसौहृदाः सम्पादितस्नेहाः ते वासनामयसंसारात् आत्मानम् अन्यानपि पुनन्ति उद्धरन्तीत्यर्थः । अकृतसौहृदास्तु आत्मानमेव न कुतोऽन्यानित्यर्थात्सूचितम् । यद्वा । ये कृतसौहृदास्ते सर्वं लोकमेव पुनन्ति पवित्रयन्ति किमुत आत्मानम् । 'मद्भक्तियुक्तो भुवनं पुनाति' इत्येकादशोक्तेः । अतस्त्वद्भजनमेव मुख्यं न ज्ञानप्रयास इत्यायातम् । गिरा परिवयसे इत्यत्र श्रुतिः 'तस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम्' । तस्येश्वरस्य विधिनिषेधरूपया दीर्घरज्जुतुल्यया वेदवाचा दामतुल्यैर्ब्राह्म-

त्वयि कृतसौहृदा इत्युक्तं तत्र त्वच्छब्दार्थं विवृण्वते—त्वमकरण इति ।

( सर्वेश्वरत्वबोधनपरेयम् )

त्वमकरणः स्वराडखिलकारकशक्तिधर-
स्तव बलिमुद्वहन्ति समदन्त्यजयाऽनिमिषाः ।
नर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो
विदधति यत्र ये त्वधिकृता भवतश्चकिताः ॥१५॥२६॥

भक्तरञ्जनी

णादिनामभिश्चेदं सर्वं जगत् सितं बद्धं ब्राह्मणस्त्वमेवं षट् कर्माणि कुरु क्षत्रियस्त्वं यजनादित्रयमित्याद्याज्ञया संबद्धमिति तदर्थः । परिचरन्तीति संबन्धे यच्छब्दव्यवधानमपि न दोषाय 'छन्दसि व्यवहिताश्च' इति नियमात् ॥ १४ ॥ २८ ॥

संक्षिप्तसार्थान्वयः—हे भगवन्! त्वम् अकरणः प्राकृतेन्द्रियरहितः स्वराट च अतः अखिलकारकशक्तिधरः अत एव च अनिमिषाः देवाः तत्पूज्याः विश्वसृजः ब्रह्मादयोऽपि अजया स्वस्वशक्त्या सह तव बलिम् उद्वहन्ति समर्पयन्ति स्वयं च मनुष्यैर्दत्तं बलिं समदन्ति । यत्र कर्मणि

पद्यानुवादः

सकलजीवनिवासतया जनास्तव भजन्ति जयन्ति मृतिं हरे ।
अभजनान्विनिपात्य पशूनिव कविमुखान् विमुखानपि नह्यसि ॥१४॥

भाषार्थ

यदि यह कहो कि सत्य ज्ञान आनन्दरूपसे ही भगवान्का ज्ञान सुलभ है भक्तिकी क्या आवश्यकता तो ऐसे दार्शनिकोंका बन्धन बताती हुई भजनके उत्कर्षको ही सिद्ध करती हैं—हे भगवन्! समस्त प्राणियोंमें आपका निवास है इस दृष्टिसे जो आपकी सब प्रकारसे सेवा करते हैं वे ही भक्तजन मृत्युके मस्तकको अनादरपूर्वक अपने पैरसे मर्दन करते हैं अर्थात् मृत्युको जीत लेते हैं और जो आपसे विमुख हैं ऐसे विशिष्ट विद्वानोंको भी आप अपनी वेदलक्षणा वाणीसे पशुओंकी तरह बाँध देते हैं। इससे यह निश्चित है कि जिन्होंने आपमें प्रेम सम्पादन किया है ऐसे भक्तजन वासनामय इस मलिन संसारसे अपनेको पवित्र अर्थात् उद्धार कर लेते हैं और दूसरोंका भी उद्धार कर देते हैं और जिन्होंने आपमें प्रेम नहीं किया है वे अपना ही उद्धार नहीं कर सकते दूसरोंका क्या करेंगे ॥ १४ ॥ २८ ॥

येऽधिकृताः ते तत्तु भवतः चकिताः भीताः सन्तः विदधति । अखिलक्षितिपतेः वर्षभुज इव । ते यथा बलिं समर्पयन्ति तदाज्ञां पालयन्ति च तद्वत् । कारकाणि इन्द्रियाणि ।

हे भगवन् ! त्वम् अकरण इन्द्रियसम्बन्धरहितोऽपि अखिलकारकशक्तिधरः । अखिलानां प्राणिनां यानि कारकाणि इन्द्रियाणि तेषां शक्तीर्धारयति प्रवर्तयतीति तथाभूतः अखिलेन्द्रियशक्तिसञ्चालक इत्यर्थः । यतः स्वराट् स्वेनैव तेजसा अप्राकृतशक्त्या राजसे दीप्यसे तथा स्वतः सिद्धज्ञानशक्तिमान् नेन्द्रियापेक्षा तवेत्यर्थः । यद्वा । स्वाभाविकैः शक्तिज्ञानानन्दादिभिर्गुणैः राजसे तथा । अत एव अनिमिषा देवाः तत्पूज्या विश्वसृजो ब्रह्मादयोऽपि अजया स्वस्वशक्त्या सह तव तुभ्यं बलिं पूजोपहारम् उद्वहन्ति समर्पयन्ति । स्वयं च मनुष्यैर्दत्तं बलिं हव्यकव्यादिलक्षणं समदन्ति भक्षयन्ति । किञ्च त्वया यत्र कर्मणि येऽधिकृताः नियुक्तास्ते तत्तु तच्च विदधति कुर्वन्ति । कथंभूताः । भवतस्त्वत्तश्चकिताः भीताः सन्तः । अत्र दृष्टान्तः—यथा वर्षभुजः खण्डमण्डलपतयः अखिलक्षितिपतेश्चक्रवर्तिनो बलिं समर्पयन्ति तदाज्ञां च पालयन्ति तद्वदित्यर्थः । करणं कारकं चात्रेन्द्रियवाचकम् 'करणं कारकं चेमे इन्द्रियेऽपि स्मृते पदे' इति निरुक्तेः । यद्वा । हे अजय ! भक्तिहीनैर्नानाविधवैदिकादिसाधनैः तत्सम्पन्नैः साधकैर्वा न जीयते इत्यजयस्तत्सम्बुद्धौ । 'नाहं वेदैर्न तपसा' 'भक्त्या त्वनन्यया शक्य' इति च गीतोक्तेः । त्वमकरणः प्राकृतेन्द्रियरहितः 'अपाणिपादो जवनः' इति श्रुतेः । तर्हीमानि मन्नेत्रश्रोत्रादीनि कुतस्त्यानि तत्राहुः—स्वैः स्वाभाविकैरप्राकृतैः नेत्रश्रोत्रादीन्द्रियैः राजसे इति स्वराट् । अत एव अखिलकारकशक्तिधरः । खिलानि तुच्छानि प्राकृतानीत्यर्थः । अखिलानि खिलभिन्नानि चिदानन्दमयस्वरूपभूतानीन्द्रियाणि शक्तीः प्राकृतेन्द्रियशक्तीश्च धरतीति तथा सः । न त्वं प्राकृतेन्द्रियो नाप्यनिन्द्रियः किन्तु पराख्यस्वरूपशक्तिमयेन्द्रियः सन् प्राकृतेन्द्रियेष्वपि श्रवणादिशक्त्याधायक इत्यर्थः । 'चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्' 'परास्य शक्तिर्विविधैव श्रूयते' 'स्वाभाविकी ज्ञानबलक्रिया च' 'विश्वतश्चक्षुरुत विश्वतो मुखः' इत्यादिश्रुतेः शेषं पूर्ववत् ॥१५॥२६॥

**पद्यानुवादः**

स्वयमनिन्द्रिय इन्द्रियचालको बलिनिदेशकरास्तव लोकपाः ।
निखिलभूमिपतेरिव खण्डपाः प्रभवतो भवतो भयशङ्किताः ॥१५॥

इन्द्रियप्रवर्तकत्वादेव न केवलमीश्वरभजनमपि तु तदुत्पन्नत्वेन तत्परतन्त्रत्वादपीत्याशयेनाहुः—स्थिरेति ।

( जीवसृष्टिपरेयम् )

स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो
विहर उदीक्षया यदि परस्य विमुक्त ततः ।
न हि परमस्य कश्चिदपरो न परश्च भवेद्
वियत इवापदस्य तव शून्यतुलां दधतः ॥१६॥ ३०॥

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः—हे विमुक्त ! ततः अजातः परस्य तव यदि अजया विहरः विहारो भवति तर्हि स्थिरचरजातयो जीवाः स्युः । कथंभूताः । उदीक्षया उत्थनिमित्तयुजः । हि यतः वियत इव अपदस्य वैषम्यानास्पदस्य परमस्य तव कश्चित् अपरः परश्च न भवेत् न भवति । कथंभूतस्य तव । शून्यतुलां निरुपमां दधतः । निमित्तं कर्मयुक्तं सूक्ष्मशरीरम् ।

हे विमुक्त ! मायातीत भगवन् ! यदि सर्गादिकाले तव अजया मायया सह उदीक्षया सर्गविषयोद्गतसङ्कल्पेन उद्गतकटाक्षेणैव वा विहरः विहारो भवति तर्हि स्थिरचरजातयः स्थावरजङ्गमजातिमन्तो जीवाः स्युः । कथंभूताः । उत्थनिमित्तयुजः । उदीक्षयैव उत्थानि उत्थितानि यानि निमित्तानि प्रारब्धकर्माणि तद्युक्तलिङ्गशरीराणि वा तैर्युज्यन्ते तथा । कथंभूतस्य

भाषार्थ

आपमें प्रेम करनेवाले जगतको पवित्र करते हैं यह कहा । अब भगवान्की महत्ता बताती हुई उनके सर्वेश्वरत्वको सिद्ध करती हैं—हे भगवन् ! आप प्राकृत इन्द्रियोंसे रहित एवं स्वरूपभूत अप्राकृत इन्द्रियोंसे विराजमान होकर समस्त जीवोंकी इन्द्रियोंके प्रवर्तक ( सञ्चालक ) हैं । अतएव इन्द्रादि तथा इनके पूज्य ब्रह्मा आदि सभी देवता अपनी-अपनी शक्तियोंके साथ मनुष्य-दत्त बलिको ग्रहण करते हुए आपकी पूजा करते हैं । एवं जिस कार्यमें आपने इनको नियुक्त किया है उस कार्यका भयभीत होकर पालन करते हैं । जिस प्रकार छोटे-छोटे राजा अपने महाराज चक्रवर्तीको बलि समर्पण करते हुए उसकी आज्ञाका पालन करते हैं । इससे यह सिद्ध हुआ कि आप ही सर्वेश्वर होनेके कारण सबके आराध्य हैं ॥१५॥२६॥

भक्तरञ्जनी

तव। ततोऽजातः मायातः परस्य दूरे वर्तमानस्य। अत एव हे विमुक्तेत्यस्य सङ्गतिः। ननु मदिच्छयैव ते भवन्तु किं निमित्तोत्थापनेनेत्याशङ्क्याहुः—नहीति। पर उत्कृष्टः दयालुर्मा न विद्यते यस्मात्तस्य परमस्य। परा सर्वोत्कृष्टा मा कृपाशक्तिर्यस्येति वा परमस्य परमदयालोस्तव कश्चित् अपर आत्मीयो न, परः परकीयश्च न भवेत् न संभवति। हीति निश्चितमेतत्। कुतः। वियत इव आकाशवत्समस्य अत एव अपदस्य वैषम्यानास्पदस्य। कुतः। शून्यतुलां दधतः तस्य शून्यस्य आकाशस्य तुलामुपमां सादृश्यं धारयतः। यथा ब्राह्मणचाण्डालयोर्बाह्याभ्यन्तरे वर्तमानस्याप्याकाशस्य न तयोरुत्कर्षापकर्षाभ्यां संबन्धस्तद्वत्तवापि। एतेन त्वयि वैषम्याभावः सृष्टौ तु वैषम्यमतो निमित्तोत्थापनस्यावश्यकत्वमिति सूचितम्। यद्वा। वियत इव अपदस्य इयत्ताज्ञानाविषयस्य। तत्र हेतुः। शून्यतुलां दधतः निरतिशयसूक्ष्मस्येत्यर्थः। 'अणोरणीयान्' इति श्रुतेः। यद्वा। शून्यतुलां शून्योपमां दधतः अपदस्य निरालम्बनस्य वियत आकाशस्येव समस्येत्यन्वयः। अयं भावः—यथा आकाशस्य दूरं दूरतरं दूरतमम् अल्पं अल्पतरं अल्पतमं च समुत्पतन्तं खगसमूहं प्रति साम्यं सर्वस्यैव गगनस्य निरालम्बनत्वादिना साम्यात् तथा तवापि यथाशक्ति भजतः प्रति साम्यमेव न वैषम्यमिति। केचित्तु वियत इव आकाशस्येव अपदस्य व्याप्यगतदोषानाश्रयस्य तत्र हेतुः—शून्यतुलां दधतः शून्यसाम्यं भजतः अतिसूक्ष्मस्येत्यर्थं इत्याहुः। परे तु शून्यतुलां दधतः वियत इव अपदस्य सर्वागोचरस्य। यद्यपि वियत् खलु वस्त्वेव तथापि न केनचिद् ग्रहीतुं शक्यते तद्ग्रहणशक्त्यभावात् एवं सर्वागोचरस्वभावगुणो भगवानपि न गृह्यते भक्त्यभावात् तस्माज्ज्ञानाग्रहं त्यक्त्वा भक्तिरेव ग्राह्या। 'सुप्रभं सच्चिदानन्दं भक्त्या जानाति चाव्ययम्' इत्यादिश्रुतेरित्यर्थमाहुः। वस्तुतस्तु शून्यां खपुष्पतुल्यामसतीमेव तुलामुपमां दधतः निरुपमस्येत्यर्थः। अथापि जीवसुबोधार्थं वियत इव आकाशस्येव समत्वादपदस्य वैषम्यानास्पदस्येत्यर्थः अतः सर्वमनवद्यम्। विहर इति। अत्र विहरणमिति व्युत्पत्त्या विहार इति वक्तव्ये वृद्ध्यभावेन बहिरङ्गशक्त्या सह दृक्पातेन कादाचित्कोऽल्पकालिक एव विहरः अन्तरङ्गशक्त्या स्वप्रेयस्या तु सर्वाङ्गीणः सर्वकालिकोऽन्योन्यातृप्तेर्वृद्धिकरः विहार इति सूचितम् अतो मूले न व्याकरणदोषः ॥१६॥३०॥

ननु स्थिरचरजातीनां त्वत्त एवोत्पन्नत्वादन्तर्यामितया नियन्तृत्वमपि तवैव तदा स्यात् यदा तार्किकाभिमतं जीवस्य विभुत्वादिरूपं खण्डितं स्यादन्यथा समत्वान्नियन्तृत्वं दुर्घटम् अतः पूर्वं तन्मतं खण्डयन्त्यस्तस्य नियन्तृत्वं द्रढयन्ति—अपरिमिता इति ।

( तार्किकमतखण्डनपरेयम् )

अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगता-
स्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा ।
अजनि च यन्मयं तदविमुच्य नियन्तृ भवेत्
सममनुजानतां यदमतं मतदुष्टतया ॥१७॥३१॥

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः—हे ध्रुव ! तनुभृतो जीवा यदि अपरिमिताः ध्रुवाः सर्वगताश्च स्युः तर्हि तेषां समत्वात् शास्यता इति नियमो न स्यादिति दोषः । इतरथा समत्वाभावे च न दोषः । कुतः । यन्मयं यस्य कार्यं जीवाख्यं वस्तु अजनि तत् अविमुच्य आदायैव सर्वस्य समं ब्रह्म नियन्तृ भवेत् । कथंभूतं तत् । अनुजानतां जानीम इत्यहङ्कारिणां वेदान्तिनां यत् अमतम् अज्ञातमेव । कथम् । मतदुष्टतया भक्तिविरुद्धतया ।

## पद्यानुवादः

यदि विहार उदीक्षणतोऽजया तव भवन्ति चराचरयोनयः ।
निरुपमस्य समस्य विमुक्त कोऽप्यनपरो न परो वियदात्मनः ॥१६॥

भाषार्थ

आप सबके इन्द्रिय-प्रवर्तक हैं केवल इतनेसे ही भजनीय नहीं किन्तु सभी जीव आपसे उत्पन्न होनेके कारण परतन्त्र हैं इस संबन्धसे भी आप भजनीय हैं यह बतलाती हैं—हे नित्यमुक्त भगवन् ! आप मायासे परे हैं फिर भी सृष्टिके समय जब कि आप केवल अपने दृष्टिपातसे मायाके साथ विहार करते हैं उसी समय उद्भूत अपने प्रारब्ध-कर्मोंसे अथवा कर्मयुक्त सूक्ष्म शरीरसे संबंध रखनेवाले नाना प्रकारके स्थावर और जङ्गम जीव उत्पन्न होते हैं किन्तु हे भगवन् ! इनमें परम दयालु आपका कोई आत्मीय व परकीय नहीं है । आप आकाशकी उपमाको धारण करके वर्तमान हैं अतएव आप आकाशके समान सर्वत्र सम हैं विषमताके पद ( स्थान ) नहीं हैं इसलिये आप ही सबके आराध्य हैं ॥ १६ ॥ ३० ॥

भक्तरञ्जनी

हे ध्रुव नित्यमूर्ते तार्किकमते तनुभृतो जीवा अपरिमिता बहवः ध्रुवा नित्याः सर्वगता व्यापकाश्च यदि स्युः तर्हि तेषां समत्वात् शास्यता न घटते इति कृत्वा त्वया नियमः नियमनं न स्यात्। इतरथा अन्यथा तु अपरिमितत्वे अध्रुवत्वे असर्वगतत्वे च घटेत। यद्वा। तर्हि तेषां त्वत्साम्यात् शास्यतेति नियमो न स्यात्। इतरथा समत्वाभावे च न नियमः किन्तु स्यादेवेति काकुः। अथवा। शास्यता न स्यात्। भवत्वेवं का हानिरिति चेत्तत्राहुः—'शास्ता विष्णुरशेषस्य' इति शिष्टैः प्रमाणीकृतो यो नियमः स च नेतरथा कदाप्यन्यथा न भवतीत्यर्थः। कथम्। यन्मयम् उपाधितो यद्विकारप्रायं यत् जीवाख्यमजनि तत् समं ब्रह्मैव तस्य स्वविकारस्य नियन्तृ नियामकं भवेत्। किं कृत्वा। अविमुच्य कारणतया तत् अपरित्यज्य। 'निर्दोषं हि समं ब्रह्म' इति गीतोक्तेः। यद्वा। मा राधा तया सहितं सममिति श्लेषोऽपि। कथंभूतं तत्। अनु अनुगतेन ज्ञानाहङ्कारेण जानतां 'वयं ब्रह्म जानीम' इति प्रलपतां शुष्कवेदान्तिनां यद् ब्रह्म अमतमज्ञातमेव। कुतः। तेषां मतस्य दुष्टतया प्रमाणविरुद्धतया। ज्ञानप्रधानत्वेन सर्वप्रमाणप्रसिद्धभक्तिविरुद्धत्वादित्यर्थः। 'भक्त्या मामभिजानाति' इत्यादिभगवद्वाक्यात्। केचित्तु मतस्य ज्ञातस्य इयत्ताज्ञानस्य ज्ञातुर्वा दुष्टतया दोषश्रवणेन। तथाहि 'यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्' इत्यादिश्रुतेरित्याहुः। वस्तुतस्तु भक्तिपक्षेऽप्यस्य योजना तथाहि—यस्य येन भक्तेन अकारो वासुदेवस्तेन रूपेण मतं ब्रह्म ज्ञातं निश्चितमित्यर्थः तस्य मतमनुभूतिविषयः। यस्य येन शुष्कवेदान्तिना स्वयं देहाध्यासवताऽपि केवलं शब्दत एवाहं ब्रह्मास्मीति आत्मप्रवञ्चनद्वारा मतं स कोटिजन्मस्वपि न वेद भक्तिशून्यान्तःकरणत्वादित्यर्थः। फलितमाह—एवं विशिष्टेनाहङ्कारेण जानतां शुष्कवेदान्तिनाम् तत् अविज्ञातम् कदापि न ज्ञातम्। यद्वा। अल्पमपि ज्ञातं नेत्यर्थः। अत्राल्पार्थे नञ्। 'तदन्यत्वं तदल्पता' इति कारिकोक्तेः। अकारो वासुदेवस्तस्य विशिष्टेन भजनेन जानतां भक्तानां तु विशेषेण पूर्णरूपेण ज्ञातमिति गूढार्थः। अद्वैतवेदान्तिनस्तु वाङ्मनसागोचरत्वेन तन्निरूप्य तद्रसास्वादहीनाः सन्तो मुह्यन्ति तेषामेवायं श्रुतेरादेशः भक्तिराश्रयणीयेति तत्त्वम्। तार्किका जीवस्वरूपमपरिमितादिरूपेण निर्दिशन्ति तस्योपपत्तिस्तु एवं ज्ञेया। तथाहि यदि एकाऽविद्या

भक्तरञ्जनी

एक एव जीवस्तर्हि एकमुक्तौ सर्वमुक्तिप्रसङ्गः, यदि च नानाऽविद्यास्तर्हि तस्यैवांशान्तरेण संसारनिवृत्त्यभावादनिर्मोक्षः एकयाऽविद्यया मुक्तो जीवः पुनरन्यया बद्ध इत्थमनिर्मोक्षः स्यात् तस्मादपरिमिता जीवा मन्यन्ते। किञ्च तेषां जीवानां यदि अणुत्वं सूक्ष्मत्वं 'सूक्ष्माणामप्यहं जीवः' इति भगवदुक्तेः तर्हि देहस्य स्थूलत्वेन सर्वव्यापिचैतन्याभावात्। एवंभूतसूक्ष्मस्य स्थूलदेहैकप्रदेशे पिपीलिकादिस्पर्शजं चैतन्यं कथं स्यात् तस्मात्सर्वगताश्च मन्यन्ते। एवं देहपरिमाणत्वे च देहस्य मध्यमं हृदयं दशाङ्गुलपरिमाणम् 'अत्यतिष्ठद्दशाङ्गुलम्' इति श्रुतेः। हृदयपरिमाणानां जीवानां सावयवत्वादनित्यत्वं स्यात् तस्मात्परिमाणाभावाद् ध्रुवा नित्याश्चेति केचन तार्किका मन्यन्ते। तन्न सत् बन्धमोक्षप्रसङ्गे एकस्मिन् बद्धे मुक्ते च सर्वबन्धमोक्षरूपो दोषो नास्ति। अविद्याभेदेन तच्छक्तिभेदेन वा बद्धमुक्तव्यवस्थासंभवात्। ईश्वरस्य तु समष्ट्युपाधेरखण्डितस्वरूपेश्वरत्वात् तस्य विद्याशक्तिप्रधानत्वान्न केनाप्यंशेन संसारशङ्का। किञ्च श्रुतिषु आत्मैक्यं प्रसिद्धमत इमं तार्किकपक्षं वेदो न सहते इति ॥१७॥३१॥

## पद्यानुवादः

बहुविभुध्रुवता यदि जीवगा तव न शासकताऽजनि यद्यतः।
तदिह तस्य नियन्तृ विजानतामविदितं विदितं यदजानताम् ॥१७॥

### भाषार्थ

जड़ चेतन सभी जीव आपसे उत्पन्न हैं इस कारण नियन्ता भी आप ही हैं किन्तु नैयायिक जीवको भिन्न, विभु और नित्य मानते हैं ऐसी स्थितिमें सम होनेके कारण आपकी नियन्तृता न बन सकेगी अतः उनके मतको खण्डन करती हुई नियन्तृत्वको दृढ़ करती हैं—हे नित्यमूर्ते! कुछ तार्किकोंके मतमें जीव अनन्त, नित्य और सर्वगत हैं यदि ऐसा माना जायगा तो सम होनेके कारण जीवोंकी नियम्यता न होगी। ऐसा होनेपर शास्त्रोंमें प्रसिद्ध जो आपके द्वारा जीवोंका नियमन है वह भङ्ग हो जायगा और यदि जीव सम न माने जायेंगे तो शास्य-शासकता बनी रहेगी और यह ठीक भी है कि जिस ब्रह्मका विकाररूप कार्य, जीव आदि प्रपञ्च उत्पन्न हुआ है वह (सम) ब्रह्म ही सबका नियन्ता हो सकता है किन्तु ज्ञानका अहङ्कार करनेवाले वेदान्ती जन उस ब्रह्मको नहीं जान सकते क्योंकि उनका मत दुष्ट अर्थात् भक्तिसे विरुद्ध है इससे भक्त जन ही आपको जान सकते हैं। अतः ज्ञानका आग्रह त्याग कर भक्तिका ही आश्रय लेना चाहिए ॥१७॥३१॥

भगवतः सकाशाज्जीवानां जन्म तस्य नियामकत्वं चोक्तं तथा सति जीवानामनित्यत्वापत्त्या कृतनाशाकृताभ्यागमादिदोषापत्तिरित्याशङ्क्य औपाधिकमेव जन्म न स्वत इत्याहुः—न घटत इति।

( निरुपाधिलयपरेयम् )

न घटत उद्भवः प्रकृतिपूरुषयोरजयो-
रुभययुजा भवन्त्यसुभृतो जलबुद्बुदवत्।
त्वयि त इमे ततो विविधनामगुणैः परमे
सरित इवार्णवे मधुनि लिल्युरशेषरसाः ॥ १८॥३२ ॥

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः—हे भगवन्! प्रकृतिपूरुषयोः उद्भवो जन्म न घटते। कुतः। अजयोः। तथापि असुभृतो जीवाः जलबुद्बुदवत् उभययुजा भवन्ति। यतो न वास्तवं जन्म ततो हेतोः ते इमे जीवाः विविधनामगुणैः सह त्वयि लिल्युः। तत्र सुषुप्तिप्रलययोः मधुनि अशेषरसा इव। मुक्तौ तु अर्णवे सरित इव। उपाधिजन्मलयाभ्यामेव जीवानां जन्ममरणे न वस्तुत इति।

यदि प्रकृतेर्जीवरूपेणोद्भवस्तर्हि प्रकृतेर्जडत्वात् जीवानां जडत्वापत्तिः। यदि च पुरुषस्य जीवरूपेणोद्भवस्तर्हि निर्विकारपुरुषस्य विकारित्वप्रसक्तिः। एवं प्रकृतिपूरुषयोरुभयोरपि उद्भवो जन्म न घटते न सङ्गच्छते। कुतः। अजयोः जन्मशून्यत्वात्तयोरित्यर्थः। 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इति गीतोक्तेः। तर्हि कथं भवन्ति तत्राहुः—उभयस्य प्रकृतेः पूरुषस्य च युजा योगेनैव असुभृतः प्राणाद्युपाधिमन्तो जीवाः जायन्ते विविधनामगुणैः सह। जलबुद्बुदवत्। यथा जलबुद्बुदाः केवलेन जलेन अनिलेन वा न भवन्ति किन्तु ताभ्यां मिलिताभ्यामेव तद्वत्। तस्माज्जीवानामुपाधिजन्मनैव जन्म न स्वत इत्युक्तम्, उपाधिलयेनैव पुनर्ब्रह्मणि लयश्रवणादपि न वास्तवं जन्मेत्याहुः—त्वयीति। यतो न वास्तवं जन्म ततो हेतोः ते इमे जीवा विविधनामगुणैः सह परमे परा सर्वोत्कृष्टा मा शोभा यस्य तस्मिन् परमे परमकारणे त्वयि श्रीकृष्णे लिल्युः लीना बभूवुः। तत्र लयश्च द्विविधः। एकः सुषुप्तिप्रलययोः। तत्र दृष्टान्तः—मधुनि अशेषरसा इव। द्वितीयश्च मुक्तौ। तत्र दृष्टान्तः—अर्णवे सरित इवेति। अत्रेदं तत्त्वम्। यथा मधुमक्षिकाभिर्नीता अनेकपुष्परसाः

भक्तरञ्जनी

मधुनि लीनाः सन्तोऽमुकस्य पुष्पस्यायं रस इति विशेषतोऽनुपलक्ष्यमाणा अपि सामान्यत उपलक्ष्यन्ते एव, तद्वत्प्रकृतेऽपि, तदानीं संसारकारणभूताया अविद्यायाः विद्यमानत्वात्। अत एव जीवानां पुनर्जन्म। द्वितीयो दृष्टान्तः—यथा मुक्तौ। तत्र ज्ञानेनाविद्याया अपि विलयात्तदा निरुपाधौ परमकारणे त्वयि सर्वे जीवाः समुद्रे गङ्गादिनद्य इव सामान्यविशेषाभ्यामनुपलक्ष्यमाणा अनवशिष्टसंस्कारा एव लीयन्ते। अत एव न तेषां पुनर्जन्मेत्यर्थः। एवञ्चाविद्योपहतानामपि जीवानामनादित्वाद् वास्तवजन्ममरणाभावान्न कृतनाशाकृताभ्यागमादिदोषापत्तिरित्यवधेयं सुधीभिः। यद्वा। हे प्रभो! प्रकृतिपूरुषयोः जगतः मातापित्रोः श्रीसीतारामयोः, श्रीराधाकृष्णयोः, श्रीरुक्मिणीवासुदेवयोर्वा उद्भवो जन्म न घटते। कुतः। अजयोः नित्यसिद्धत्वेन जन्मरहितयोः। इमे जीवास्तु ततः प्रागुक्तात् नियन्तुर्हेतुभूतात् उभययुजा मातापितृसंयोगेन जलवायुसंयोगजन्यजलबुद्बुदवत् असुभृतः क्षणविनाशिदेहधरा भवन्ति। एवंभूता अपि केचित् कृतपुण्यपुञ्जाः ते तव विविधनामगुणैः श्रुतैः कीर्तितैश्च परमे मधुनि परममाधुर्यरूपे त्वयि लिल्युः लयं प्रापुः। त्वच्चरणकमलमाधुर्यानुभवं चक्रुः। ननु नानाभेदाः प्राणिनः कथं समानफलभाजस्तत्र दृष्टान्तमाहुः—यथा अशेषरसा मधुरक्षारादिविविधजलाः सरितः अर्णवे लिल्युस्तद्वदित्यर्थः। अभीष्टप्राप्तौ मार्गनिरोधकाभावेऽप्ययं दृष्टान्तो बोद्धव्यः। यद्वा। हे उभय! युगलमूर्ते श्रीराधाकृष्ण असुभृतो देवमनुष्याद्या जीवा अजयोः आत् वासुदेवात् त्वत्तो जातयोः प्रकृतिपूरुषयोर्युजा संयोगेन जायन्ते। यथा जलवायुसंयोगेन बुद्बुदास्तद्वत्। ततो भक्तसंगात् ते इमे जीवा अशेषरसाः त्वयि पूर्णस्नेहाः सन्तः युगलमूर्तौ त्वय्येव विविधनामगुणैः सह लिल्युः समुद्रे नद्य इव। कथंभूते त्वयि। परा मा शोभा यस्य अत एव मधुनि अमृतादपि मिष्टतमे ॥ १८ ॥ ३२ ॥

## पद्यानुवादः

प्रकृतिपूरुषयोगभवा इमे न च पृथग्जलबुद्बुदवज्जनाः।
त्वयि विशन्ति रसा इव ते मधुन्युपरमे[1] परमे सरितोऽर्णवे ॥१८॥

१ उप समीपे रमा यस्य तस्मिन्।

एवं जीवानां जन्म ततः कर्माणि पुनस्तत्र लय इति संसारचक्रे परिभ्रमणमुक्तमिदानीं तन्निवृत्तये भयप्रदर्शनपूर्वकं भगवदनुरागमुपदिशन्त्यः स्तुवन्ति—नृषु तवेति।

( भगवदनुरागपरेयम् )

नृषु तव मायया भ्रमममीष्ववगत्य भृशं
त्वयि सुधियोऽभवे दधति भावमनुप्रभवम्।
कथमनुवर्ततां भवभयं तव यद्भ्रुकुटिः
सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयम् ॥१६॥२३॥

---

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः—हे भगवन्! अमीषु वादिषु नृषु तव मायया भृशं दुस्तरं भ्रमम् अवगत्य ज्ञात्वा सुधियः अनुप्रभवं प्रतिजन्मैव त्वयि भावं दधति प्रेम कुर्वन्ति। कथंभूते। अभवे भवनिवर्तके। यत् यतः त्रिणेमिः कालरूपा तव भ्रुकुटिः अभवच्छरणेषु भवच्छरणरहितेषु अभक्तेष्वित्यर्थः। मुहुः भयं सृजति करोति। अतः तव त्वामनुवर्ततां भक्तानां भवभयं कथं न कथमपि।

हे भगवन्! अमीषु पूर्वोक्तेषु नृषु नानावादिषु तव मायया भ्रमं भ्रान्त्यैव नानामतकल्पनम् अवगत्य ज्ञात्वा सुधियो विवेकिनः अभवे संसारनिवर्तके त्वयि भृशमतिशयेन भावं भक्तिं दास्यादिभावं वा दधति कुर्वन्ति। अनुप्रभवं प्रतिजन्मैव। यद्वा। कथंभूतं भावम्। अनु अनुक्षणं प्रभव उल्लासो यस्य तम्। यद्वा। अनुप्रभवं निरन्तरं प्रवर्धमानम्। यद्वा। अनु अनन्तरं प्रभवः भवतः प्रादुर्भावो यस्मात्तं शीघ्रं।

भाषार्थ

यदि आपसे जीव उत्पन्न हैं तो जीवोंमें अनित्यता आजायेगी अतः उपाधिके जन्मसे ही जीवोंका जन्म है वास्तविक नहीं यह सिद्ध करती हुई कहती हैं—हे भगवन्! प्रकृति और पुरुष दोनोंकी ही जीवरूपसे उत्पत्ति नहीं हो सकती क्योंकि वे दोनों अज ( जन्म रहित ) अर्थात् अनादि हैं। इससे दोनोंके संयोगसे प्राणधारी नानाविध जीव उत्पन्न होते हैं। जैसे जलके बुलबुले न केवल जलसे, न केवल वायुसे किन्तु दोनोंके संयोगसे उत्पन्न होते हैं। और फिर यह जीव विविधनाम गुणोंके साथ परम कारणरूप आपमें ही लीन हो जाते हैं। जैसे पुष्पोंके संपूर्ण रस मधुमें

भक्तरञ्जनी

त्वत्प्रापकमित्यर्थः। स्वामिचरणास्तु अनु अनु प्रभवो जन्म यस्मिन् तमिति भ्रमविशेषणमाहुः । यद्वा । त्वयि भावं श्रवणकीर्तनादिना मनोवृत्तिं दधति स्थापयन्ति । यत् यस्मात् तव भ्रुकुटिः कालरूपा अभवच्छ्ररणेषु न भवान् शरणं रक्षक आश्रयो वा येषां तेषु त्वद्भजनविमुखेष्वेव भयं "जन्ममरणादिदुःखं मुहुः वारं वारं सृजति उत्पादयति अतस्त्वामेव अनुवर्तमानानां भजतां भक्तानां भवभयं संसारभयं कथं स्यान्न कथंचिदपीत्यर्थः। कथंभूता भ्रुकुटिः। त्रिणेमिः। त्रयो गुणा नेमयश्चक्रधारावदावरका यस्यां सा। यद्वा। तिस्रो नेमयः भूतभविष्यद्वर्तमानाख्या यस्याम्। चक्रवर्ती तु भवभयं तेषां कथमनुवर्तताम् अनुवृत्तं भवतु त्वद्दास्यारम्भदशायामेव तस्यापगमादित्याह। केचित्तु अमीषु भगवदाराधनपरेष्वपि नृषु पञ्चायतनमध्ये को देवः पूज्यः सेव्यश्चेति भ्रमं मनोभ्रमणात्मकं संशयमवगत्य प्राप्य तेषां निश्चयार्थं सुधियः श्रीनारदाद्यास्तव मायया कृपया। 'माया दम्भे कृपायां च' इति विश्वः । अभवे भवनिवर्तके त्वय्येव सर्वदेवेभ्यो मुख्यतया भावं सख्यदास्यादिकं प्रतिजन्म प्रतिक्षणं कुर्वन्तीत्यर्थ इत्याहुः॥ १६ ॥ ३३ ॥

## पद्यानुवादः

**भ्रममवेत्य हरे भुवि वादिनां विदधते त्वयि भक्तिमनुत्तमाः।**
**सृजति कालवली विमुखेषु ते भयमसौ यमसौख्यकरोऽनिशम्॥१६॥**

*भाषार्थ*

लीन रहते हैं तथा नदियाँ जैसे समुद्रमें लीन रहती हैं। अतः उपाधिका ही जन्म और उपाधिका ही लय श्रवण होनेसे जीवोंका वास्तविक जन्म नहीं यह सिद्ध हुआ ॥ १८ ॥ ३२ ॥

इस प्रकार जन्म, कर्म और मरणद्वारा संसारमें जीवोंके भ्रमणका वर्णन किया। अब इसकी निवृत्तिके लिये भगवान्में अनुरागका उपदेश करती हुई श्रुतियाँ स्तुति करती हैं—हे भगवन्! पूर्वमें कहे हुए इन वादियोंमें आपकी मायासे नाना मतोंकी कल्पना भ्रम है। ऐसा जानकर विवेकी पुरुष प्रत्येक जन्ममें संसारनिवर्तक आपमें ही अनुराग करते हैं। क्योंकि ( त्रिणेमि ) भूत, भविष्य, वर्तमान रूपसे कालरूप आपकी भ्रुकुटि भजन विमुख प्राणियोंमें ही बार-बार जन्म-मरणादि भयको उत्पन्न करती है। अतः भजन द्वारा आपका अनुवर्तन करनेवाले भक्तजनोंको संसारभय कैसे हो सकता है कभी नहीं। इसलिये भगवान्में ही अनुराग करना चाहिए ॥१६॥३३॥

स च भगवति भावो गुरूपदेशसाध्यं मनोनिग्रहं विना दुर्लभ इत्याहुः—विजितेति।

(गुरुभक्तिद्योतनपरेयम्)

विजितहृषीकवायुभिरदान्तमनस्तुरगं
य इह यतन्ति यन्तुमतिलोलमुपायखिदः।
व्यसनशतान्विताः समवहाय गुरोश्चरणं
वणिज इवाज सन्त्यकृतकर्णधरा जलधौ ॥ २० ॥ ३४ ॥

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः—हे अज ! ये गुरोः चरणं समवहाय विजितहृषीकवायुभिः योगिभिरपि अदान्तमनस्तुरगं दुर्निग्रहमनोरूपाश्वं यन्तुं यतन्ति निरोद्धुं प्रयतन्ते ते उपायखिदः उपायेषु क्लिश्यन्तः व्यसनशतान्विताश्च सन्तः इह संसारे सन्ति तिष्ठन्ति। कुत्र के इव। जलधौ अकृतकर्णधराः अकृतनाविका वणिज इव। अतिलोलम् अति चञ्चलम् इति तुरगविशेषणम्।

हे अज ! जन्मादिरहित हे भगवन् ! अो वासुदेवस्तेन रूपेण जात इति वा। विजितानि हृषीकाणि इन्द्रियाणि वायुः प्राणवायुश्च यैस्तैः योगिभिरपि अदान्तं दुर्निग्रहं मनोरूपं तुरगं ये नराः गुरोश्चरणं समवहाय अनाश्रित्य। यद्वा। कर्णधारस्य गुरोस्तव चरणपरिचर्णं समवहाय आसनबन्धाद्यैरुपायैः खिद्यमानाः तैरेव यन्तुं निरोद्धुं यतन्ते यत्नं कुर्वन्ति ते व्यसनशतान्विताः असंख्यविपदाकुलाः सन्तः इह संसारसमुद्रे सन्ति तिष्ठन्ति। संसारदुःखे निमग्ना भवन्तीत्यर्थः। अत्र दृष्टान्तः यथा अकृतकर्णधरा अस्वीकृतनाविकाः वणिजः जलधौ निमग्नाः सन्ति तद्वत्। कथंभूतं तुरगम्। अतिलोलम् अतिचञ्चलम्। 'कर्णधारस्तु नाविकः' इत्यमरः। उक्तञ्च श्रीवल्लभाचार्यैः 'अदान्ते मनसि ज्ञाते योगार्थं न यतेद्

भाषार्थ

किन्तु भगवान्में अनुराग बिना मनके निग्रहके नहीं हो सकता और मनका निग्रह बिना गुरुकृपाके नहीं हो सकता इसलिये गुरुसेवाका उपदेश करती हैं—हे अज ! वासुदेव रूपसे प्रकट होनेवाले हे भगवन् ! प्राण और इन्द्रियोंको जिन्होंने जीत लिया है ऐसे योगियोंसे भी नहीं दमन करने योग्य अत्यन्त चञ्चल मनरूपी घोड़ेको जो प्राणी इस संसारमें गुरु (भगवद्भक्त) या भगवान्के चरणको छोड़कर

गुरूपदेशो हि संसारे वैराग्यं जनयित्वा त्वयि भावम् उत्पादयति तत्र वैराग्यं भक्तेरङ्गमित्याहुः--स्वजनेति ।

( वैराग्यबोधनपरेयम् )

स्वजनसुतात्मदारधनधामधरासुरथै-
स्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे ।
इति सदजानतां मिथुनतो रतये चरतां
सुखयति को न्विह स्वविहते स्वनिरस्तभगे ॥ २१ ॥३५॥

भक्तरञ्जनी

बुधः ।गुरुसेवापरो भूत्वा भक्तिमेव सदाभ्यसेत्' ॥ इति । प्राणैरिन्द्रियैश्च विजितैः क्रियमाणैर्ये यन्तुं यतन्त इति वा। एतेन योगमेव ये मुख्यं साधनं मन्यन्ते तेऽपि निरस्ताः । 'युञ्जानानामभक्तानां प्राणायामादिभिर्मनः । अक्षीणवासनं राजन् ! दृश्यते पुनरुत्थितम् ॥' इति वचनात् ॥२०॥३४॥

## पद्यानुवादः

विजितवायुभिरप्यदमं मनो जगति ये विनियन्तुमिहोद्यताः ।
अकृतनाविकवद्विपदब्धिगास्तव पदे वपदे[1] च गुरोर्विना ॥२०॥

संक्षिप्तसार्थान्वय :—हे भगवन् ! श्रयतः त्वामाश्रयतः पुंसः त्वयि आत्मनि परमात्मनि सति स्फुरति सति नृणामेतैः तुच्छैः स्वजनादिभिः किं फलं न किमपि । इति सत् त्वन्नित्यसुखमजानतां मिथुनतो मिथुनी भूय रतये चरताम् अजानतः चरतःपुंसः इह संसारे स्वजनादिषु को नु अर्थः विषयः सुखयति न कोऽपि । कथंभूते इह संसारे । स्वविहते स्वत एव नाशशीले । पुनः । स्वनिरस्तभगे सुखलेशशून्ये च ।

भाषार्थ

योगादि साधनोंसे क्लेश प्राप्त करते हुए उनसे रोकनेका यत्न करते हैं वे असंख्य विपत्तियोंसे व्याकुल होकर दुःख-समुद्रमें ही डूबे रहते हैं जैसे यात्रा करनेवाले व्यापारी बनिये बिना नाविकके समुद्रमें डूब जाते हैं । अतः अभिमानको छोड़कर सर्वप्रथम भगवद्भक्त (गुरु) के चरणका ही आश्रय लेना चाहिए ॥ २०॥ ३४॥

१ वपनं वपः । घञर्थे कः । संसारबीजानां कर्मणां वपनम् आशक्तिपूर्वकमनुष्ठानं तद्यतः खण्डयतः ।

भक्तरञ्जनी

हे भगवन्! त्वां श्रयतः सेवमानस्य पुंसः त्वयि आत्मनि परमात्मनि श्रीकृष्णे सन्निहिते सति नृणां तुच्छैरेतैः स्वजनादिभिः किं प्रयोजनं न किमपीत्यर्थः। कथंभूते त्वयि। सर्वरसे सर्वे रसाः सुखानि यस्मिन् सर्वसुखनिधाने। इति इत्थं सत् त्वत्संबन्धिनित्यसुखम्। यद्वा। सत् परमार्थस्वरूपं त्वामजानताम् अत एव मिथुनतः स्त्रिया मिथुनीभूय रतये विषयोपभोगाय गृहे चरतां वर्तमानानां नृणामत्रापि योज्यं सर्वत्र कर्मणि षष्ठ्यः। अजानतः चरतः नृन् इह संसारे को नु अर्थः स्वजनादिषु अन्यतमः सुखयति आनन्दयति न कोऽपीत्यन्वयः। तस्मादात्मैव सर्वरस इत्यन्वेष्टव्य इत्यर्थः। कथंभूते संसारे। स्वविहते स्वत एव विहते कालग्रस्तत्वान्नश्वरे। 'सर्वं चेदं क्षयिष्णु यथेमे दंशमशकादयः' इति श्रुतेः। पुनश्च। स्वनिरस्तभगे सुखलेशशून्ये च। स्वेन निरस्तो भग आत्मनो ज्ञानानन्दैश्वर्यं यस्मात् तथाभूते। स्वविहतः स्वनिरस्तभग इति प्रथमान्तपाठे तु कोऽर्थ इत्यस्य विशेषणद्वयम्। स्वेनैव परिणामादिमत्त्वेन विहतः। स्वरूपेणैव जडत्वादिना निरस्तसारश्च। स्वजनाः बन्धुमित्रादयः। सुताः पुत्राः पुत्र्यश्च। आत्मा देहः। दारा भार्या। धनं स्वर्णरत्नादिसंपत्। धाम गृहम्। धरा पृथ्वी। असवः प्राणाः। रथशब्दो वाहनोपलक्षकः हस्त्यश्वादिश्च तैः। चक्रवर्ती तु असवः शारीरबलानीत्याह। केचित्तु नृणां मध्ये त्वां श्रयत इत्यन्वयमाहुः। मिथुनत इति ल्यब्लोपे पञ्चमी। नु इति सभ्रभङ्गे। रे मूढाः! एतद्विचारयत यस्मिन् संसारे सोऽपि कालग्रस्तत्वान्नश्वरः येन देहादिना सोऽपि जडत्वान्नश्वरो रोगग्रस्तश्च। येषां विषयाणामुपभोगस्तेऽप्यापातरमणीयत्वेन परिणामविरसाश्चेत्यतोऽत्र केन कस्य भोग इति भ्रूभङ्गेन भर्त्सना व्यञ्जिता। किञ्च अजानतां चरतां नृणामिति त्रिकेण त्रिगुणात्मके जगति त्रिगुणात्मनां जीवानां भगवद्विमुखकर्मस्वेव निरूढसंबन्धत्वात् तस्य च भगवद्भक्तिं विना दुर्निवारत्वादिति द्योतनार्थमेव सम्बन्धित्वविवक्षया षष्ठ्यः प्रयुक्ताः। एतेन ज्ञानादिप्रसङ्गं विहाय तन्निवृत्त्यर्थं त्वद्भजनमेव मुख्यतयोचितं तत्र च प्रथमं भक्तानां झटिति फलाभावेन व्यग्रता तत्र विश्वासाभानश्च पूर्वं स्फुरति तेषामाश्वासनं भगवत्या श्रुत्या क्रियते-त्वयि सतीति। भगवान् सन्निहित एव धर्यं मा त्यजत परीक्षणार्थमेवैष विलम्ब इत्यालोडयतां भक्तानामुपर्याशु भगवत्कृपा आविर्भवति, तया च भक्तेर्दार्ढ्यं,

गुरूपदिष्टतत्त्वनिश्चायकः सत्सङ्गः सन्तश्च प्रायस्तीर्थेषु वसन्ति अतः साधकहितार्थं तीर्थसेवामेवोपदिशन्ति–भुवीति ।

( तीर्थसेवनपरेयम् )

भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदा-
स्त उत भवत्पदाम्बुजहृदोऽघभिदङ्घ्रिजलाः ।
दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे
न पुनरुपासते पुरुषसारहरावसथान् ॥२२॥३६॥

भक्तरञ्जनी

ततो भगवद्रसानुभूतिः स्वस्वमतानुसारेणेति 'यो यच्छ्रद्धः स एव सः' इति गीतोक्तेः । सर्वाचार्यमतानां सामञ्जस्यान्न पारस्परिक-विरोधलेशोऽपीति संक्षिप्य भागवतसिद्धान्तो ध्वनितः ॥२१॥३५॥

पद्यानुवादः

तव पदं श्रयतस्त्वयि संस्थिते भवति किं फलमस्य धनादिभिः ।
विषयिणः किमु वस्त्विह तोषयेदसदजासदजानदनात्मनः[1] ॥२१॥

संक्षिप्तसार्थान्वयः—हे भगवन्! नित्यसुखे आत्मनि परमात्मनि त्वयि ये सकृदपि मनो दधति ते पुनः पुरुषसारहरावसथान् पुरुषस्य विवेकादिलोपकान् गृहान् न उपासते । उत किन्तु ते भुवि पुरुपुण्य-

भाषार्थ

संसारमें गुरुका उपदेश ही वैराग्यद्वारा आपमें प्रेम-भावको उत्पन्न करता है अतः वैराग्य भी भक्तिका अङ्ग है यह वर्णन करती हुई श्रुतियाँ कहती हैं—हे भगवन्! आपका आश्रय करनेवाले जो भक्तजन हैं उनके समीप सर्वसुखस्वरूप आप श्रीकृष्णरूपसे स्थित रहते हैं। ऐसी अवस्थामें मनुष्योंको कष्ट देनेवाले बन्धु, मित्र, पुत्र, स्त्री, धन, गृह, पृथ्वी, प्राण और रथ आदि तुच्छ नश्वर पदार्थों से क्या लाभ? कुछ भी नहीं। दिव्य वस्तुओंसे सुख प्राप्त करना चाहिए। इस आपके नित्य, दिव्य सुखको न जाननेवाले रतिके लिये मिथुन होकर गृह-स्थाश्रममें रहनेवाले घरमें विचरनेवाले इन पामर प्राणियोंको कालग्रस्त, सारहीन इस संसारमें कौन वस्तु सुख दे सकती है? कोई नहीं। अतः सबसे विरक्त होकर आपका ही आश्रय करना चाहिए ॥ २१ ॥ ३५ ॥

१ असती या अजा माया तया सत् परमार्थसुखम् अजानन्तो ये अनात्मानः आत्मज्ञानशून्यास्तान् ।

भक्तरञ्जनी

तीर्थसदनानि नानापुण्यतीर्थानि क्षेत्राणि च उपासते। एवम् ऋषयो भक्ताः भूत्वा विमदाः विगतदेहाहङ्काराः जीवन्मुक्ताः भवन्तीत्यर्थः। कथम्भूतास्ते। भवत्पदाम्बुजहृदः। पुनश्च। अघभिदङ्घ्रिजलाः, इति पदाभ्यां क्रमेण भक्तलक्षणं भक्तमहत्त्वं च द्योतितम्।

हे भगवन्! नित्यसुखे परमानन्दमूर्तौ आत्मनि परमात्मनि श्रीकृष्णे त्वयि ये सकृत् एकवारमपि मनो दधति मनो धारयन्ति ते पुरुषस्य जीवस्य सारहरान् विवेकादिलोपकान् आवसथान् गृहान् पुनर्न उपासते न सेवन्ते। ऋषयो भक्तास्ते न उपासते इति उत किमुत वक्तव्यमित्यर्थः। के ऋषयः। ये विमदाः निरहङ्कारास्ते। कुतः। भवतः पदाम्बुजं हृदि येषां ते तथाभूताः। कुत्र निवसन्ति। भुवि कर्मभूमौ यानि पुरूणि बहूनि पुण्यतीर्थानि गङ्गायमुनादीनि, सदनानि काशीवृन्दावनादीनि च तानि अधिवसन्ति प्रायस्तत्रैव महत्सङ्गो भवतीति। यद्वा। पुरु अधिकं पुण्यं भजनलक्षणं येषान्तानि यानि तीर्थानि गुरुवो महान्तस्तेषां सदनानि आश्रमानित्यर्थः। तीर्यते संसारो यैरित्यर्थसाम्यान्महान्तोऽपि तीर्थानि। यद्वा। एवं याजना। ये त्वयि सकृदपि मनो दधति ते पुनः गृहान्नोपासते। गृहेषु मिथुनतो न चरन्ति अपि तु ते ऋषयो भक्ताः सन्तः भुवि पुण्यसद्नान्येव उपासते इति द्विरावर्तनीयम्। उत एवार्थे। कथंभूता ऋषयः इति कृत्वा त्रीणि विशेषणानि याज्यानि। यद्वा। हे पुरुषसार! हे पुरुषोत्तम! ये त्वयि सकृदपि मनो दधति ते ऋषयो भूत्वा तीर्थसद्नानि उपासते ततश्च इह हरावसथान् रुद्राधिष्ठितान् क्रोधाहङ्कारादीन् न उपासते न सेवन्ते उत तद्वशा नैव भवन्ति। पुनश्च जन्मान्तरे हरस्य श्रीरुद्रस्य आवसथान् श्मशानभूमीश्च न सेवन्ते जन्ममरणशून्या भवन्तीत्यर्थः। यद्वा। ये त्वयि मनो दधति ते पुनः पुरुषविवेकादिहरान् गृहान्नोपासते किन्तु भुवि नानापुण्यतीर्थानि क्षेत्राणि च अधिवसन्तः ऋषयो भक्ताः भूत्वा विमदा भवन्ति मदहेतुभूतदेहादिसंस्कारान्मुक्ता भवन्तीत्यतीव सरलान्वयः। शेषं यथावत्। तोषिणी तु पुरुषसारहरावसथान् स्वजनादिमयानित्याह ॥२२॥३६॥

पद्यानुवादः

सकृदपि त्वयि ये दधते मनो गृहरता न हि, तीर्थपरायणाः।
मुनिवरा भवदङ्घ्रिहृदोऽमला दिवि सदा विसदालयमासते ॥२२॥

एवं पूर्वं महत्सङ्गादिभिर्भगवद्भजनमुपपादितं तत्तु तदैव सङ्गच्छेत यदि वेदानां भगवत्परत्वं स्यात्। दृश्यतेऽत्र तेषां क्रियापरत्वं प्रतिपाद्यते च मीमांसकैस्तथैवातस्तन्मतखण्डनपूर्वकं वेदानां भगवत्परत्वमेव द्रढयन्त्यः स्तुवन्ति—सत इति।

( मीमांसकमतखण्डनपरेयम् )

सत इदमुत्थितं सदिति चेन्ननु तर्कहतं
व्यभिचरति क्व च क्व च मृषा न तथोभययुक्।
व्यवहृतये विकल्प इषितोऽन्धपरम्परया
भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान् ॥ २३ ॥ ३७ ॥

संक्षिप्तसार्थान्वयः—सतः परमेश्वरात् उत्थितम् उत्पन्नमिदं विश्वं सत् इति चेत्त्वं मन्यसे तदा त्वत्कथनं ननु निश्चयेन तर्कहतं तर्केण दूषितम्। भेदसाधकेन हेतुना अभेदसाधनं युक्तिविरुद्धमित्यर्थः। सत इति भेदे पञ्चमी। यदि च कनककुण्डलवत् यत् यत उत्पन्नं तत्र तद्भेदो न दृश्यते इति कृत्वा भेदनिषेधः साध्यते तेन चाभेदात् जगति सत्यत्वं, तत्राहुः क्व च क्वापि पितापुत्रादौ व्यभिचरति। पितुरुत्पन्ने पुत्रे भेददर्शनात् त्वदुक्तं दोषग्रस्तं भवति अतो विश्वं न सदित्यर्थः। यदि च उत्पन्नपदेन उपादानकारणजन्यत्वं गृह्यते तदुपादानं च वीर्यं तेन पित्रा सहाभेदात् तद्वज्जगतोऽपि पुनः सत्यत्वं तत्राहुः—क्व च मृषा। क्व च रज्जुसर्पादौ उपादानकार्यं मृषा दृश्यते। अत्र सर्पस्योपादानकारणं रज्जुस्तज्ज्ञाने सर्पस्य बाधात् रज्जुरेव शिष्यते तेनोपादानकार्यं मिथ्या भवतीत्यर्थः। अतो विश्वं न सदिति। यदि च अज्ञानयुक्तोपादानकार्यं मृषा स्वीक्रियते तत्राहुः

भाषार्थ

गुरूपदिष्ट तत्त्वका निश्चय करानेवाला सत्संङ्ग है और सत्पुरुष प्रायः तीर्थोंमें ही निवास करते हैं अतः साधकके लिये तीर्थ-सेवनका उपदेश करती हुई श्रुतियाँ स्तुति करती हैं—हे भगवन्! परमानन्दमूर्ति-परमात्मा आपमें एक बार भी जिन्होंने कथा-श्रवणद्वारा मनको धारण किया है वे फिर मनुष्योंके सार, विवेक आदिको हरण करनेवाले आवसथ अर्थात् स्वजनादिमय गृहोंमें आसक्त नहीं होते किन्तु पृथ्वीमें नाना पुण्य तीर्थ और क्षेत्रोंमें निवास करते हुए आपके चरणकमलको हृदयमें धारण कर मदका हेतु जो देहादि संसार है उससे विगत अर्थात् मुक्त हो जाते हैं ॥२२॥३६॥

भक्तरञ्जनी

न तथोभययुक्। उभयेन अविद्यायुक्तेन ब्रह्मणा युज्यते कार्यत्वात् इत्युभययुक् अज्ञानयुक्तोपादानकार्यमिदं विश्वमपि न तथा न सदित्यर्थः। यदि चार्थ-क्रियारूपव्यवहारार्थं विश्वं सदिति चेत्तदपि नेत्याहुः। व्यवहृतयेऽर्थ-क्रियार्थं तु अन्धपरम्परया कल्पितवटभूतवद्भ्रम इष्टोऽभिमत एव तेनैव कल्पितभूतभ्रमेण मूर्च्छामरणादिरूपार्थक्रिया दृश्यते एव अतो व्यवहारार्थ-मपि विश्वं न सदित्यर्थः। यदि च 'अक्षय्यं ह वै' इत्यादिश्रुत्या नित्यत्वप्रतिपादनाद्विश्वं सदेवेति तदपि नेत्याहुः—भ्रमयतीति। हे भगवन्! ते भारती वेदवाणी उरुवृत्तिभिर्नानागौणलक्षणादिवृत्तिभिः उक्थजडान्मी-मांसकान् भ्रमयति विपरीतार्थबुद्धिं जनयति तान् त्वमेवोद्बोधय, न हि तत्र नित्यत्वे तात्पर्यमपि तु प्रशंसायामतो विश्वं मिथ्यैवेति सिद्धम्। जगत्सत्यत्वखण्डनपरेयं वा।

अथ वेदान्तिमतसिद्धमेव हेतुं क्रोडीकृत्य मीमांसकः पूर्वपक्षमारभते इदं विश्वं सत्। कुतः। सतः परमेश्वरात् उत्थितमुत्पन्नमतः इति सता जगदभेदः साध्यते तदा वेदान्ती दूषयति—हे मीमांसक! इति मन्यसे चेत्तर्हि ते इदमनुमानं ननु निश्चयेन तर्केण हतं दूषितम्। भेदसाधकेन हेतुनाऽभेदसाधनं युक्तिविरुद्धमित्यर्थः। यत्रापादान-निर्देशस्तत्र भेद इति नियमात्। पुनर्मीमांसक आक्षिपति ननु नाभेदं साधयामः किन्तु यत् यत उत्पन्नं तत्र तद्भेदो न दृश्यते इति कृत्वा भेदं प्रतिषेधयामः एवं च भेदनिषेधे सति जगति सदभेदात् सत्यत्वमेव सिद्ध्येत्ततो वेदान्ती पुनरत्र व्यभिचारं ददाति—क्व च व्यभिचरतीति। क्व च क्वापि पितापुत्रादिषु मुद्गरघटप्रध्वंसादिषु च त्वदुक्तं व्यभिचरति दोषग्रस्तं भवति भेददर्शनादिति भावः। त्वयोक्तं यत् यत उत्पन्नं तत्र भेदो न दृश्यते पितुः सकाशात्पुत्र उत्पन्नः मुद्गराद् घटप्रध्वंसो जातः तत्र भेदो नास्ति किम्। पितुर्द्विजत्वात् गौरत्वात् पुष्टत्वात् पुत्रस्य च तद्वैप-रीत्यात्। एवं मुद्गरस्य भावरूपत्वात् घटप्रध्वंसस्याभावरूपत्वाद्भावा-भावयोरैक्यानुपपत्तेरिति प्रत्यक्ष एव भेदः अतो जगति न सत्यत्वम्। पुनर्मीमांसक आक्षिपति—पितुः पुत्र उत्पन्नस्तत्र उत्पन्नत्वं तावत् किन्नाम उत्पन्नत्वञ्चात्र तदुपादानत्वं न तु तन्निमित्तत्त्वम्। अतो न व्यभिचारः। न हि पुत्रस्य पिता उपादानकारणं न वा घटध्वंसस्य मुद्गर उपादानकारणं किन्तु पिता मुद्गरश्च तत्र निमित्तकारणमेव

भक्तरञ्जनी

पुत्रोपादानं वीर्यं घटध्वंसोपादानं तु कपालादि तथा च व्यभिचाराभावेन जगति सत्यत्वं सुस्थिरमेव । पुनर्वेदान्ती दूषयति क्व च मृषेति । क्व च रज्जुसर्पादौ उपादानकार्यमपि मृषा मिथ्या भवतीत्यर्थः । तथा च रज्जूपादानके सर्पे पुनरपि व्यभिचारः । यत्र रज्जौ अन्धकारे सर्पबुद्धिर्जाता तदुपादानकारणं रज्जुरेव किन्तु तज्ज्ञाने सर्पबाधात् उपादानकार्यस्य मिथ्यात्वात् तेनैवाभेदं संसाध्य जगति यत्सत्यत्वं स्थापितं तन्निर्मूलमेव। सुस्थिरं च जगतो मिथ्यात्वम्। पुनर्मीमांसक आक्षिपति–तत्र तु अज्ञानाद् रज्जौ सर्पबुद्धिर्जाता अतो यत्राज्ञानयुक्तमुपादानं तत्कार्यस्य सर्पस्य मिथ्यात्वं मयापि स्वीक्रियते कोऽत्र दोषः। वेदान्ती सहर्षं वदति सत्यं सत्यम् । अस्मत्पक्ष एवाऽऽयातः न तथेति। अत्रापि अविद्यासंवलितस्यैव ब्रह्मणो जगदुपादानत्वं न केवलस्य सतः । अत उभाभ्यां सदविद्याभ्यां युक् युक्तमिदं जगत् त्वन्मतेऽपि न तथा न सदित्यर्थः । इति स्वोक्त्यैव परास्तो मीमांसकः । पुनरपि किञ्चिद्विचार्य मीमांसक आक्षिपति ननु माभूदनेन हेतुना प्रपञ्चस्य सत्यत्वमन्यहेतुना साधयामः । तथाहि इदं विश्वं सत् अर्थक्रियाकारित्वात् न यदेवं न तदेवं यथा शुक्तिरजतमित्यनुमानेन विश्वस्य सत्यत्वं साधयामः । तदा वेदान्ती पुनर्दूषयति–व्यवहृतये इति । व्यवहृतये व्यवहाराय अर्थक्रियार्थं तु अन्धपरम्परान्यायेन विकल्पो भ्रम इष्टोऽभिमतः एव तेनैवार्थक्रियारूपो व्यवहारः संपत्स्यते यथा यक्षशून्येऽपि वटे श्रुत्वैव केनचिदन्धेन अन्ध उपदिष्टः अस्मिन्वटे यक्षोस्तीति तेनान्यः तेनान्य इत्यन्धपरम्परया भ्रमेण सिद्धस्य मिथ्यारोपितस्यापि यक्षस्य मूर्च्छामरणादिरूपार्थक्रियाकारिता दृश्यते स्वप्नाङ्गनादेर्दंशनस्पर्शनादिना वीर्यपातादिरूपार्थक्रियाकारिता दृश्यते कूटकार्षापणादिनाऽपि क्वचिद्व्यवहारो दृश्यते अतः अर्थक्रियाकारित्वरूपो हेतुरप्रयोजक इति । न तेन विश्वस्य सत्यत्वं सिद्ध्यति अतो विश्वं मिथ्यैवेति । अथ पुनरप्येकां युक्तिमादाय मीमांसक आक्षिपति—ननु 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' 'अपाम सोममृता अभूम' इत्यादिभिः कर्मफलस्य नित्यत्वप्रतिपादनात् असत्त्वं न घटते नहि नित्यं वस्तु असद्भवति तस्माद्वेदप्रतिपादितत्वाद् द्वैतं सत्यमेव इत्याशङ्क्य पुनर्वेदान्ती भगवन्तमालक्ष्य श्रुतिमुखेन खण्डयन्नुपसंहरति भ्रमयतीति । हे भगवन् ! ते भारती वेदलक्षणा वाणी उरुवृत्तिभिः बह्वीभिः गौणलक्षणादिवृत्तिभिर्मीमांसकान् भ्रमयति मोहयति अतस्तान्

भक्तरञ्जनी

त्वमेवोद्बोधयेति वाक्यशेषः । कथंभूतान् । उक्थजडान् । उत्तिष्ठति स्वर्गादिफलं यस्मात्तत् उक्थं कर्म तत्र जडान् आग्रहपरान् वेदतात्पर्यानभिज्ञानित्यर्थः । यथोक्तं श्रीवल्लभाचार्यैः क्रियासक्ताः पदार्थान्न विचारयन्तीति ते उक्थजडा उच्यन्ते इति । अयमभिप्रायः । नहि वेदः कर्मफलस्य नित्यतां प्रतिपादयति किन्तु लक्षणया तस्य प्राशस्त्यमात्रं बोधयति विध्येकवाक्यत्वात् । यतो मीमांसकमतेऽर्थवादानां प्राशस्त्ये लक्षणा तेषां स्वार्थपरित्यागेनैव विधिवाक्येऽन्वयश्च । तथाहि अक्षय्यामृतपदयोर्यागप्राशस्त्ये जहल्लक्षणा यतश्चातुर्मास्ययागः प्रशस्तस्तस्माच्चातुर्मास्ययागेनेष्टं भावयेदित्येवमुक्तार्थवादयोश्चातुर्मास्येन यजेत इति विधिना एकवाक्यता । अन्यथा एकोद्देशेनानेकविधानरूपवाक्यदोषः । किञ्च 'तद्यथेह कर्मचितो लोकः क्षीयते' एवमेवाऽमुत्र 'पुण्यचितो लोकः क्षीयते' इति श्रुत्यन्तरविरोधश्च तस्मान्नैतावतापि विश्वस्य सत्यत्वमपि तूक्तरीत्या मिथ्यात्वमेवेति निश्चितम् । अत्राऽद्वैतवादे तावत् यादृशमसत्यत्वं रज्जुसर्पवद्भ्रान्तिविषयत्वमङ्गीक्रियते तादृशमसत्यत्वं वैष्णवमते नाङ्गीक्रियते । किन्तु विनाशित्वरूपं सततैकस्वरूपाभाववत्त्वं वा असत्यत्वं तच्चोचितमेवेति विशेषः । तस्माज्जगतोऽसत्यत्वप्रतिपादने न वैष्णवमतविरोधोऽपीत्यलम् । एतच्च बालसुबोधार्थमुक्तम् ॥ २३ ॥ ३७ ॥

पद्यानुवादः

विश्वं सत् सत उत्थितात्[१] यदि तदाऽभेदो न हेतुर्हतः
भेदो नेत्यनुमानतो व्यभिचरत्येतत्पितापुत्रयोः ।
शुक्राद् भेद इतेऽपि रज्जुभुजगोपादानकार्यं मृषा
ह्यज्ञानोत्थमसत्तु चेज्जगददोऽविद्यासदुत्थं न सत् ॥
व्यवहृतिर्भ्रमतो वटभूतवच्छ्रुतिषु रुच्युदयाय फलश्रुतिः ।
इदिति कर्मजडभ्रमतो मतं जगदतो गदतो भवतो गिरा ॥२३॥

१—नपुंसके भावे क्तः

## भाषार्थ

इस प्रकार पूर्वमें सत्सङ्गके द्वारा भगवद्भजनका निरूपण किया किन्तु वह भजन तभी संगत हो सकता है जब कि वेद भगवत्परक हों, वे तो क्रियापरक देखे जाते हैं और मीमांसक भी उनका उसी प्रकारसे प्रतिपादन करते हैं अतः श्रुतियाँ मीमांसकोंके मतका खण्डन कर वेद भगवत्परक हैं इसको दृढ़ करती हुई स्तुति करती हैं—

हे भगवन् ! सत् परमेश्वरसे उत्पन्न होनेके कारण यह जगत् सत् है यदि ऐसा कहो तो यह मीमांसकका अनुमान ( तर्कहत ) युक्ति-विरुद्ध है क्योंकि भेद-साधक हेतुसे अभेद सिद्ध करना अनुचित है। 'सतः' यह भेदमें पंचमी है। यदि यह कहो कि हम अभेद सिद्ध नहीं करते किन्तु भेदका निषेध करते हैं अर्थात् जिससे जो उत्पन्न होता है उसमें भेद नहीं है तो इसमें व्यभिचार दोष आता है। पितासे उत्पन्न पुत्रमें, मुद्गर-प्रहारसे उत्पन्न घट-ध्वंसमें प्रत्यक्ष भेद देखा जाता है। यदि उत्पन्नका अर्थ उपादान कारण से जन्य करें तो जिसका उपादान कारण है उसका उससे भेद नहीं है जैसे पुत्रका उपादान वीर्य और घटनाशका कपालादि है। पिता और मुद्गर तो उसके निमित्त कारण हैं। इससे उक्त दोष अवश्य हट जाता है किन्तु उपादानका कार्य जो रज्जुसर्प है उसको मिथ्या देखते हैं ( क्व च मृषा ) इसलिये फिर दोष ज्योंका त्यों रह जाता है। यदि यह कहो कि अज्ञानयुक्त उपादानका कार्य मिथ्या है तो यह जगत् भी अविद्यायुक्त ब्रह्म से संबंध रखता है। ( उभययुक् ) अर्थात् यह भी अज्ञानयुक्त ब्रह्म उपादानका कार्य है केवल ब्रह्मका नहीं अतः यह भी (न तथा) सत् नहीं हो सकता। यदि अर्थ-क्रियाके लिये विश्वको सत्य माना जाय सो भी ठीक नहीं क्योंकि व्यवहारके लिये अन्ध-परम्परासे जो भ्रम चला आ रहा है वही हमें भी अभीष्ट है उसीसे अर्थ-क्रिया चलती रहेगी। जैसे प्रेत-शून्य वटमें किसी अन्धेको प्रेत-बुद्धि हो गई उसने दूसरे अन्धेसे उसने तीसरे अन्धेसे कहा। इस अन्ध-परंपरा के भ्रमसे उसमें प्रेत सिद्ध हो गया। अब उसी प्रेत-भ्रमसे मनुष्योंको मूर्च्छा मरणादिरूप अर्थक्रिया हो जाती है अतः व्यवहारके लिए विश्वको सत्य मानना उचित नहीं। यदि यह कहो कि श्रुतियोंमें कर्मोंका फल नित्य सुना जाता है इसलिये विश्व सत्य है सो भी ठीक नहीं क्योंकि वहाँ अर्थवाद है उसका प्रशंसामें तात्पर्य है, नित्यतामें नहीं। इस रहस्यको नहीं जाननेवाले कर्म-जड़ मीमांसकोंको हे भगवन् ! आपकी वेदवाणी नाना प्रकारकी मुख्या, गौणी आदि वृत्तियों से मोहित करती हैं अतः आप ही इनके अज्ञानको दूर कर अपना भक्त बनावें ॥ २३ ॥ ३७ ॥

तदेवं विश्वस्य सत्यत्वे युक्त्यभावमुक्त्वा मिथ्यात्वे युक्तिमाहुः—नेति।

( जगन्मिथ्यात्वबोधनपरेयम् )

न यदिदमग्र आस न भविष्यदतो निधना-
दनुमितमन्तरा त्वयि विभाति मृषैकरसे।
अत उपमीयते द्रविणजातिविकल्पपथै-
र्वितथमनोविलासमृतमित्यवयन्त्यबुधाः ॥ २४॥३८ ॥

भक्तरञ्जनी

संक्षिप्तसार्थान्वय :—हे भगवन्! यत् यस्मात् इदं जगत् अग्रे न आस। तथा निधनादनु प्रलयानन्तरं च न भविष्यत्। अतः अन्तरा मध्येऽपि एकरसे त्वयि मृषा एव विभातीति मितं निश्चितम्। यत एवम् अतः श्रुत्या इदं जगत् द्रविणजातिविकल्पपथैः द्रविणजातीनां मृत्सुवर्णादीनां विकल्पपथैः घटकुण्डलादिभेदैः उपमीयते तत्सदृशतया निरूप्यते। अथापि वितथं मिथ्याभूतमेव यतो मनोविलासं जगत् ऋतं सत्यमिति ये अवयन्ति जानन्ति तेऽबुधाः।

हे भगवन्! यत् यस्मात् इदं विश्वम् अग्रे सृष्टेः पूर्वं न आस न आसीत्। निधनात् अनु प्रलयानन्तरं च न भविष्यत् न भविष्यति शत्रन्तं वा। अतः आद्यन्तयोरविद्यमानत्वात् अन्तरा मध्येऽपि एकरसे निर्विकारे त्वयि मृषा मिथ्यैव विभाति विकाररूपेण भातीति मितं निश्चितम्। 'आदावन्ते च यन्नास्ति वर्त्तमानेऽपि तत्तथा' इत्युक्तेः, शुक्तिरजत-रज्जुसर्पादिवदित्यर्थः। विशब्दोऽत्र विकारार्थकः। यत एवमतः इदं विश्वं द्रविणजातीनां मृत्सुवर्णादीनां विकल्पपथैः घटकुण्डलादिभेदैरुपमीयते तत्सदृशतया निरूप्यते असदेवेति निश्चीयते। यथा घटकुण्डलादिनाममात्रं, मृदाद्येव सत्यम्, एवमाकाशादिरूपं जगन्नाममात्रं, ब्रह्मैव सत्यमित्यर्थः। अथापि ये वितथमसत्यं च तत् मनोविलासं मनःकल्पनारूपम् इदं जगत् ये ऋतं सत्यमिति अवयन्ति जानन्ति तेऽबुधा अपण्डिता एव। उक्तं च योगवासिष्ठे—'दीर्घस्वप्नमिमं विद्धि दीर्घं वा चित्तविभ्रमम्। दीर्घं वापि मनोराज्यं संसारं रघुनंदन' इति। 'मिथ्याभूतं सद्वा इदं मनस्येव परमं प्रतिष्ठितं यदिदं किञ्च' 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादिश्रुतिषु च। एतन्मूलकमनुमानमपि ज्ञेयम्—

८

नन्वविद्याकार्यंरूपस्य जगतोऽसत्त्वे तेन सम्बन्धाभावाज्जीवस्य किन्निमित्तः संसारः कथं वा ईश्वरस्यैव नित्यमुक्ततेत्यपेक्षायां जीवेश्वरवि-शेषं दर्शयन्त्यः स्तुवन्ति—स यदेति।

( जीवेश्वरवैलक्षण्यपरेयम् )

स यदजया त्वजामनुशयीत गुणांश्च जुषन्
भजति सरूपतां तदनु मृत्युमपेतभगः।
त्वमुत जहासि तामहिरिव त्वचमातभगो
महसि महीयसेऽष्टगुणितेऽपरिमेयभगः ॥ २५ ॥ ३६ ॥

---

भक्तरञ्जनी

विवादास्पदं विश्वं मिथ्या आद्यन्तयोरसत्त्वात् विकारित्वात् दृश्यत्वाच्च शुक्तिरजतादिवत्। यत् आद्यन्तयोरविद्यमानं दृश्यं विकारि च तत् असत् यथा शुक्तिरजतम् इत्यन्वये दृष्टान्तः। यच्च आद्यन्तयोर्विद्यमानं न दृश्यं न च विकारि तत् असदपि न यथाऽऽत्मेति व्यतिरेके दृष्टान्तश्च। अत्र मतान्तरेषु जगत्सत्यासत्यत्वविषये नानाविधो विवादः स च बुद्धेर्भ्रान्तिकरत्वाद् भक्तैर्नादरणीयः मन्तव्यं च तावदेतावदेव सर्वत्र भगवद्दृष्टया असदपि सर्वं जगत् सदेव। तद्व्यतिरिक्तदृष्टया तु सदपि सर्वमसदेवेत्यार्षसिद्धान्त इत्यलम् ॥ २४ ॥ ३८ ॥

भाषार्थ

इस प्रकार प्रपञ्चकी सत्यतामें कोई प्रमाण नहीं यह कह चुके। अब इसके मिथ्यात्वमें प्रमाण और अनुमानको बताती हुईं श्रुतियाँ स्तुति करती हैं—हे भगवन्! यह जगत् सृष्टिके पूर्वमें नहीं था और प्रलयके पश्चात् भी नहीं रहेगा किन्तु जैसे शुक्तिमें रजत और रज्जुमें सर्प मध्यमें ही भासित होता है आदि अन्तमें नहीं उसी प्रकार एकरस ( निर्विकार ) आपमें भी यह जगत् मिथ्या विकाररूपसे मध्यमें ही भासित हो रहा है यह निश्चित है इसीलिये सुवर्ण आदिके विकार घट कुण्डलादिकसे इसकी तुलना की गई है। अर्थात् घट, कुण्डल आदि जैसे नाममात्र हैं मृत्तिका और सुवर्ण सत्य है उसी प्रकार आकाशादिरूप यह जगत् नाममात्र है ब्रह्म ही केवल सत्य है। फिर भी जो मिथ्या मनकी कल्पनारूप इस जगत्को सत्य ऐसा मानते हैं वे वस्तुतः पण्डित नहीं हैं ॥ २४ ॥ ३८ ॥

भक्तरञ्जनी

## पद्यानुवादः

**जगदिदं न हि पूर्वमनन्तरं त्वयि विभाति मृषैकरसेऽन्तरा ।**
**कनकवैकृतवन्न[1] बुधा विदन्त्यवितथं वितथं मनसो भ्रमम् ॥२४॥**

संक्षिप्तसार्थान्वयः—स तु जीवः यत् यदा अजया अविद्यया अजां मायां देहरूपाम् अनुशयीत आश्रयेत तत् तदा गुणान् जुषन् सरूपतां देहसाधर्म्यं भजति । तदनु अपेतभगः तिरोहितज्ञानः सन् मृत्युं संसारं च भजति । त्वम् उत त्वं तु अहिः त्वचमिव तामजां जहासि । यतः त्वम् आत्तभगः नित्यप्राप्तैश्वर्यः तत्रापि अपरिमेयभगः अपरिच्छिन्नैश्वर्यश्च सन् महसि स्वस्वरूपे महीयसे विराजसे । कथंभूते महसि । अष्टगुणिते अष्टसिद्धियुक्ते । यद्वा । यत् यस्मात् ततो गुणानिति योजना ।

हे भगवन् ! त्वदंशो जीवः यत् यदा अजया मायया मोहितः सन् अजां प्रकृतिपरिणामरूपां देवमनुष्यादिमूर्तिम् अनुशयीत आलिङ्गति बिभर्तीत्यर्थः तत्तदा गुणान् विषयान् जुषन् सेवमानः सरूपतां देहसाधर्म्यं भजति प्राप्नोति देहाभिमानी भवतीत्यर्थः । तदनु तदनन्तरं मृत्युं जन्ममरणादिलक्षणं संसारं च भजतीति चकारस्यान्वयः । एवं संसारभाक्त्वात् अपेतः अपगतः भगो ज्ञानैश्वर्यादिर्यस्य तथाभूत इव तिरोहितज्ञानो भवति । त्वमुत त्वं तु तामजां मायां जहासि उपेक्षस इत्यर्थः । यथा अहिः सर्पः त्वचं कञ्चुकं तद्वत् । यतः आत्तभगः नित्यप्राप्तैश्वर्यः तत्राऽपि अपरिमेयभगः अपरिमितैश्वर्यः न जीववत्परिच्छिन्नैश्वर्य इत्यर्थः । महसि स्वस्वरूपे महीयसे विराजसे । कथंभूते । अष्टगुणिते अणिमादिसर्वसिद्धियुक्ते । अष्टौ गुणास्ते नित्यं सञ्जाता अस्येति तारकादित्वादितच् । वस्तुतस्तु आत्तभगो नित्यप्राप्तैश्वर्यः महसि गौरतेजसि श्रीराधाविग्रहे एकीभूय विराजसे अतएव अपरिमेयभगस्त्वमितिसूचनार्थं पुनरुपादनम् । कीदृशे । अष्टा भगवति व्याप्ता गुणा वात्सल्यादयो नित्यं सञ्जाता अस्यापि 'अशू' व्याप्तौ इत्यस्मात् । अपरिमितैश्वर्यस्य तव परिमितैश्वर्याज्जीवान्महाविशेष इति भावः । उभयत्र तुशब्देन जीवस्य नित्यबद्धता ईश्वरस्य च नित्यमुक्तता सूचिता । आत्मगुणाननादृत्य परकीयमायागुणान् जुषते इति द्योतनार्थं जुषन्निति

१—कनकस्य वैकृतं विकृतिसमूहः तद्वदित्यर्थः ।

एवं भगवतो भजनमेव मुख्यं तेनैव संसारनिवृत्तिरन्यथा तत्र परिभ्रमणमित्युक्तम्। इदानीं तु ये साधनार्थं त्यक्तगृहा अपि पुनर्मठादि-व्यापारासक्तास्तान् शोचन्त्यो निन्दन्ति—यदि नेति।

(दाम्भिकसंन्यासिनिन्दापरेयम्)

यदि न समुद्धरन्ति यतयो हृदि कामजटा
दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः।
असुतृपयोगिनामुभयतोऽप्यसुखं भगव-
न्ननपगतान्तकादनधिरूढपदाद् भवतः ॥२६॥४०॥

---

भक्तरञ्जनी

स्मैपदम्। केचित्तु यत् यदा अजया हेतुभूतया अपेतभगो भवति-तदैव अजामविद्यामनुशयीतेत्यन्वयमाहुः। भगशब्दार्थस्तु—ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा। इत्युक्तरूपो ज्ञेयः॥ २५ ॥ ३९ ॥

## पद्यानुवादः

यदजया विषयान्प्रभजन् जनो भजति जन्ममृती विवशस्ततः।
अहिरिव त्वचमत्र विहाय तामुपरि मेऽपरिमेय विराजसे ॥२५॥

संक्षिप्तसार्थान्वयः—हे भगवन्! ये यतयः हृदि वर्तमानाः कामजटाः कामवासनाः यदि न समुद्धरन्ति तेषामसतां हृदि गतोऽपि

### भाषार्थ

अच्छा यदि अविद्याका कार्यरूप जगत् सत्य नहीं है तो उससे जीवका संबन्ध भी नहीं फिर जीवको संसार कैसे और ईश्वरकी नित्यमुक्तता कैसे इस आशङ्कामें जीवेश्वरकी विशेषता बतलाती हुईं श्रुतियाँ स्तुति करती हैं—हे भगवन्! जब आपका अंशभूत यह जीव मायासे मोहित होकर (अजा) अर्थात् प्रकृतिके परिणामरूप देव मनुष्यादि योनिको ग्रहण करता है तब शब्दादिविषयोंका भोग करता हुआ देहाभिमानता को प्राप्त करता है। तदनन्तर नष्टज्ञान होकर जन्म और मृत्युरूप संसारको प्राप्त होता है। यह जीवकी दशा का वर्णन किया। और जैसे सर्प अपनी केंचुलीको उपेक्षासे छोड़ देता है उसी प्रकार आप इस मायाको त्याग देते हैं एवं स्वतःसिद्ध अष्टसिद्धियोंसे युक्त अपने तेजोमय रूपमें विराजते हैं। आप नित्य ऐश्वर्यसे पूर्ण हैं। आपका ऐश्वर्य अपरिमेय है जीवोंके समान परिमित नहीं है ॥ २५॥३९ ॥

भक्तरञ्जनी

त्वं दुरधिगमः दुष्प्रापः । क इव । अस्मृतकण्ठमणिरिव । अतः असुतृपयोगिनाम् उभयतोऽपि असुखमेव । अनपगतान्तकात् इह मरणरूपम् । भवतोऽनधिरूढपदात् अप्राप्तपदत्वात् परत्र नरकरूपं च । असुतृपाः इन्द्रियतर्पणपराः ।

हे भगवन् ! ये यतयः यतिवेषविडम्बकाः योगच्छद्मना मुण्डशिरस्काः हृदि स्थिताः कामजटाः कामवासनाः न समुद्धरन्ति नोन्मूलयन्ति । अन्तर्भोगवासना न त्यजन्ति । तेषामसतां दाम्भिकानां हृदि गतोऽपि भवान् दुरधिगमः दुष्प्रापः । अत्र तदनुरूपदृष्टान्तः—अस्मृतकण्ठमणिः । लुप्तोपमेयम् । कण्ठस्थोऽपि अस्मृतो मणिरिव हृदि गतोऽपि त्वं तैर्न ज्ञायस इत्यर्थः । न केवलमियदेव दुःखं किन्तु अन्यदपीत्याहुःअसुतृपेति । असूनेव तर्पयन्तीति असुतृपाः इन्द्रियतर्पणपराः ये विषययोगिनस्तेषाम् उभयतोऽपि इह परत्र च असुखं दुःखमेव । क्रमेण दर्शयन्ति-अनपगतात् अनिवृत्तात् अन्तकात् मृत्योरिह मरणरूपं दुःखम् । परत्र च नरकप्राप्तिरूपम् । कुतः । भवतः न अधिरूढं न प्राप्तं यत् पदं स्थानं तस्मात् हेतोः । यद्वा । भवतोऽनधिरूढपदात् अप्राप्तपदत्वादिति बहुव्रीहे— र्भावप्रधानो निर्देशः । तस्माद्भक्तिबलेन कामवासनानां समूलोन्मूलने यतमानस्यैव संन्यासिनो भगवत्स्वरूपानन्दलाभः विस्मृतस्मृतकण्ठमणिवद्भवति नान्यस्येति तात्पर्यम् । केचित्तु भवतः अनपगतान्तकात् अनिवृत्तकालरूपात् परलोके भयम् । अनधिरूढपदात् अप्राप्तसाधनादस्मिंल्लोकेऽपि दुःखमेवेति उभयत्र सुखाभावे सति कुतस्तरां संसारनिवृत्तिसाधनगन्धस्याशापीत्याहुः । सन्दर्भस्तु अनपगतान्तकात् मृत्युपरम्परारूपसंसारात् आध्यात्मिकादि दुःखम् । न अधिगतं नात्मोन्मुखीकृतं पदं चरणारविन्दं यस्य तस्मात् भवतस्तूपेक्षारूपमित्याह । समुद्धरन्तीत्यत्र समुपसर्गेण त्रिविधैषणायास्त्यागो विवक्षितः । ताश्च लोकैषणावित्तैषणापुत्रैषणारूपा ज्ञेयाः । योगिनामित्यत्र योगिनस्तु 'विषयेन्द्रियसंयोगो योग इत्यप्यपण्डितैः' इत्युक्तरूपा ज्ञेयाः ॥२६॥४०॥

## पद्यानुवादः

विषयलम्पटयत्यतिदुर्गमो हृदिगतोऽस्मृतकण्ठमणिर्यथा ।
इह मृतेर्नरकात्परतोऽसतामुभयतो भयतोऽप्यसुखं सदा ॥२६॥

अनन्यभक्तानां तु अत्र सांसारिकसुखदुःखाद्यभावः परत्र मोक्षश्चेत्युभयतः सुखमेवेत्याहुः—त्वदवगमीति ।

( भक्तोभयसौख्यबोधनपरेयम् )

त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयो-
र्गुणविगुणान्वयांस्तर्हि देहभृतां च गिरः ।
अनुयुगमन्वहं सगुण गीतपरम्परया
श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥२७॥४१॥

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः—हे सगुण ! त्वदवगमी त्वज्ज्ञानवान् भवदुत्थशुभाशुभयोः गुणविगुणान्वयान् सुखदुःखसंबन्धान् न वेत्ति । तर्हि देहभृतां गिरश्च निन्दास्तुतिवाक्यानि च न वेत्ति इति का कथा । यतः अनुयुगं तत्रापि अन्वहं मनुजैः भक्तैः सह गीतपरम्परया श्रवणभृतः त्वं तेषाम् अपवर्गगतिर्भवसि । गिरो नेत्यनेन ऐहिकं सुखम् । अपवर्गगतिरित्यनेन पारलौकिकसुखं चेति भक्तानामुभयतोऽपि सुखमुक्तम् ।

हे सगुण ! हे वात्सल्यादिगुणयुक्त भगवन् ! त्वामवगच्छति जानातीति त्वदवगमी त्वद्भक्तः भवतः कर्मफलदातुः त्वत्तः भवच्छक्तिरूपात् दैवात् वा

भाषार्थ

इस प्रकार भगवद्भजन ही मुख्य है उसीसे संसारकी निवृत्ति होती है अन्यथा नानायोनियोंमें भ्रमण करना पड़ता है यह बात कही । अब साधनके लिये जिन्होंने स्त्री पुत्रादिकोंको त्याग दिया फिर भी मठादि व्यापारोंमें आसक्त होते हैं उनका शोक करती हुई श्रुतियाँ भर्त्सना करती हैं—हे भगवन् ! शिर मुड़ाकर यतिके वेषका अनुकरण करनेवाले जो संन्यासी हृदयमें स्थित विषयोंकी वासनाओंको यदि जड़से उखाड़कर नहीं फेंकते तो उन दाम्भिक संन्यासियोंके लिये आप उनके हृदयमें रहते हुए भी दुष्प्राप हैं जैसे विस्मृत कंठस्थ मणिको पुरुष प्राप्त नहीं करते और उसे इधर-उधर ढूँढ़ते हैं । इसलिये विषयोंसे इन्द्रिय, प्राणको तृप्त करनेवाले इन दाम्भिकोंको इस लोकमें भीषण मृत्युसे और आपका स्थान नहीं प्राप्त होनेके कारण परलोकमें भीषण नरकसे इस प्रकार दोनों ओरसे दुःख ही दुःख प्राप्त होता है सुखका लेश भी नहीं मिलता अतः मठादि झंझटोंको त्यागकर शीघ्र भगवान्में प्रेम हो ऐसा ही साधन करना चाहिए यह हमारी उनको चेतावनी है ॥२६॥४०॥

भक्तरञ्जनी

उत्थयोराविर्भूतयोः शुभाशुभयोः अनादिपुण्यपापकर्मणोः फलभूतान् गुणविगुणान्वयान् सुखदुःखसंबन्धान् न वेत्ति नास्य तेषां स्फूर्तिरिति-भावः। यद्येवं तर्हि देहभृतां देहाभिमानिनां गिरः विधिनिषेधलक्षणाः निन्दास्तुतिलक्षणा वा न वेत्तीति का कथा। कुतः। यतोऽनुयुगं प्रतियुगं मनुजैः भक्तैः सह सगुणस्य अनन्तकल्याणगुणयुक्तस्य तव या गीत-परम्परा कथापरम्परा तया अन्वहं प्रतिदिनं त्वं श्रवणभृतः श्रवणेन चेतसि धृतः। अतः कथं तत्स्फूर्तिरित्यैहिकं सुखमुक्तम्। परत्र च तेषां त्वम् अपवर्गगतिः मोक्षप्रापक इति परलोकेऽपि सुखं तेन भक्तानां हस्तद्वये मोदक इति लोकोक्तिः सूचिता। सगुणेति पृथक् पदं समासगञ्च। त्वां भजनीयत्वेन अवगन्तुं शीलं यस्येति त्वदवगमी त्वल्लीलारसज्ञ इति वा। चक्रवर्ती तु अपकृष्टा वर्गा धर्मार्थकाममोक्षाख्याश्चत्वारः पुरुषार्था यतस्तथाभूता गतिर्भवसि प्रेमभक्तिप्रद इत्यर्थः 'कुर्वन्ति कृतिनः केचि च्चतुर्वर्गं तृणोपमम्' इत्युक्तेरित्याह। यद्वा। स सर्वप्रसिद्धः त्वदवगमी न वेत्ति यतः गुणगीतपरम्परया श्रवणभृत इत्यन्वयः ॥२७॥४१॥

पद्यानुवादः

इह न वेद शुभाशुभयोः फलं विधिनिषेधगिरश्च भवत्परः।
श्रवणतश्च परत्र विमुक्तिदः सगुण हे गुणहेयतया धृतः ॥२७॥

*भाषार्थ*

और जो अनन्य भक्त हैं उनको सांसारिक दुःख का ज्ञान न होने से ऐहिक सुख और मरने के पश्चात् पारलौकिक मोक्ष-सुख इस प्रकार उभयतः सुख है इसीका वर्णन करती हुईं श्रुतियाँ स्तुति करती हैं—

हे सगुण ! वात्सल्यगुणसम्पन्न भगवन् ! आपके लीलारसको जाननेवाला भक्त दैवसे उत्पन्न अनादि पुण्य-पापके फलस्वरूप सुख दुःखके संबंधको नहीं जानता और न देहाभिमानी मनुष्योंके निन्दा स्तुति वाक्योंको ही जानता है क्योंकि प्रत्येक युगमें सगुणमूर्तिधारी आपकी कथापरंपरासे प्रतिदिन श्रवण द्वारा आप उसके हृदयमें विराजमान रहते हैं इसलिये उसको ऐहिक दुःख नहीं होता और मरनेके पश्चात् उसकी मोक्षगति भी आप ही हैं, इसलिये परलोकमें भी उसको दुःख नहीं होता। उभयतः सुख होनेसे उसके दोनों हाथोंमें लड्डू हैं अतः ज्ञाना-दिका प्रयास छोड़कर भगवान् में ही प्रेम सम्पादन करना चाहिए यही हमारा अन्तिम उपदेश एवं समस्त श्रुतियों का निचोड़ है ॥ २७ ॥ ४१ ॥

तदेवमानन्दसमुद्रस्य भगवतः स्तुतिव्याजेन लोकार्थं गूढतत्त्वं निरूप्य तदानन्दस्यापरिच्छिन्नतामनुभवन्त्यो भावोद्रेकात्तदङ्गा एव जाता अतः स्पर्शसुखाद्विह्वलाः सत्यः स्तुतिमुपसंहरन्ति—द्युपतय इति ।

( भगवत्सुखानन्त्यवोधनपरेयम् )

द्युपतय एव ते न ययुरन्तमनन्ततया
त्वमपि यदन्तराऽण्डनिचया ननु सावरणाः ।
ख इव रजांसि वान्ति वयसा सह यच्छ्रुतय-
स्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः ॥२८॥४२॥

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः—हे भगवन् ! द्युपतयः स्वर्गादिलोकपतयः ते अन्तं न ययुः । किं बहुना अनन्ततया त्वमपि आत्मनोऽन्तं न यासि । ननु अहो यदन्तरा यन्मध्ये सावरणाः सप्तावरणयुक्ताः अण्डनिचयाः ब्रह्माण्डसमूहाः वयसा कालचक्रेण सह एकदैव वान्ति परिभ्रमन्ति खे रजांसि इव यत् यस्मात् तस्मात् श्रुतयः अतन्निरसनेन जगत्खण्डनद्वारा त्वयि हि फलन्ति त्वामेव प्रतिपाद्य सफला भवन्ति । कथंभूताः । भवन्निधनाः भवत्पर्यवसायिन्यः ।

हे भगवन् ! द्युपतयः स्वर्गादिलोकपतय इन्द्रब्रह्मादयः ते तव स्वरूपानन्दस्य अन्तमवधिं पारं वा न ययुः न प्रापुः । तत्र वयं काः । किं बहुना त्वमपि सर्वज्ञः आत्मनोऽन्तं न यासि न जानासि । तत्र हेतुमाहुः—अनन्ततया अन्ताभावेन । न हि शशविषाणखपुष्पाद्यज्ञानं सार्वज्ञ्यं निहन्ति न वा तदप्राप्तिः सर्वशक्तिकत्वम् । अनन्तत्वमेवाहुः—यस्य तव अन्तरा प्रत्येकरोमकूपमध्ये ननु अहो सावरणाः उत्तरोत्तर-दशगुणपृथिव्यादिसप्तावरणसहिता अण्डनिचया ब्रह्माण्डसमूहा वयसा कालचक्रेण सह एकदैव न तु पर्यायेण वान्ति परिभ्रमन्ति । कस्मिन् कानीव । खे आकाशे रजांसि इव परमाणव इव । यस्मादेवं तस्मात् श्रुतयः त्वयि निर्गुणे प्राकृतगुणरहिते श्रीकृष्णे हि साक्षात् फलन्ति समन्विता भवन्ति त्वामेव प्रतिपाद्य सफला सार्थका भवन्तीत्यर्थः । कथं । अतन्निरसनेन । अतत् मिथ्याभूतं जगत् तस्य निरसनेन खण्डनद्वारा । 'सर्वं खल्विदं ब्रह्म' 'नेह नानास्ति किञ्चन' इत्यादि श्रुत्येत्यर्थः । यतो भवन्निधना भवन्निश्वासभूतत्वाद्भवत्येव सर्वकारणरूपे

निधनं लयः पर्यवसानं यासान्ताः भगवद्विषयिण्य एव सर्वाः श्रुतयः इत्यर्थः। सर्वे वेदा यत्पदमामनन्ति 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिवचनात्। अयं भावः—यथा सुवर्णहीरकादिक्षेत्रे मृत्पाषाणजलादिषु महता यत्नेन दूरीकृतेष्वेव सुवर्णहीरकादिकमुपलभ्यते एवमत्रापि मिथ्याभूतप्रपञ्चान्तर्गतानन्तवस्तूनां निरासे कृते एव तत्पदार्थप्राप्तिर्नान्यथेति। वस्तुतस्तु 'वयमपि ते समाः' इत्युक्तेर्गोप्य इव तादृगिच्छासम्पन्नत्वाद्दिव्यातिदिव्यविग्रहधारिण्यः सत्यः त्वय्येव कन्दर्पकोटिलावण्ये श्रीकृष्ण एव फलन्ति समन्विता जाताः सफलमनोरथाः वा जाताः। त्वद्बाहुभ्यां संश्लिष्टा बभूवुरित्यर्थः। वर्तमानसामीप्ये भूते लट्। केन हेतुना। श्रो वासुदेवः स एव तत् पूर्णं ब्रह्म तस्य नि नितरां रसनेन आस्वादनेन हेतुना। यतो भवानेव नि निश्चितं धनं पतिरूपं यासान्ताः श्रुतय इति श्लिष्टोऽर्थः। अत्रार्थे प्रमाणं तु 'निभृतमरुन्मनोक्षेति श्रुतिव्याख्यायामवगन्तव्यम्। एतेन निर्गुणे श्रुतयः कथं चरन्तीति प्रश्नोपक्रमस्य त्वयि हि फलन्तीत्युपसंहारवाक्येन सोपपत्तिकं समाधानमप्युक्तं भवति। हिशब्दोऽत्र साक्षादर्थकः। कथं चरन्तीति प्रश्नस्य समाधानपरेयं वा। सप्तावरणस्य उत्तरोत्तरदशगुणत्वे मानं तु वैष्णवे पराशरोक्तं द्रष्टव्यम् तथाहि—एते सप्त मया लोका मैत्रेय कथितास्तव। पातालानि च सप्तैव ब्रह्माण्डस्यैष विस्तरः ॥ १ ॥ एतदण्डकटाहेन तिर्यगूर्ध्वमधस्तथा।

## भाषार्थ

इस प्रकार आनन्दसमुद्र भगवान्की स्तुतिके व्याजसे लोककल्याणार्थ गूढ़ तत्त्वका निरूपण कर असीम आनन्दका अनुभव करती हुईं श्रुतियाँ भगवान्में ही संश्लिष्ट हो असमर्थताके कारण स्तुतिका उपसंहार करती हैं—

हे भगवन्! स्वर्ग आदि लोकोंके स्वामी इन्द्र, ब्रह्मा आदि आपके अन्तको नहीं जानते। अधिक क्या कहें अनन्त होनेके कारण आप भी अपने अन्तको नहीं जानते। आश्चर्य है कि आपके एक-एक रोमकूपमें पृथिव्यादि सात आवरणोंके सहित ब्रह्माण्ड-समूह कालचक्रसे एक ही साथ घूमा करते हैं। जैसे आकाशमें धूलिके कण उड़ते रहते हैं। ऐसी विलक्षण आपकी अनन्तता है अतएव श्रुतियाँ इस मिथ्याभूत सान्त जगत्का खण्डन कर अनन्त प्राकृत गुण रहित निर्गुण आपका ही साक्षात् प्रतिपादनकर आपमें ही मिलकर सफल-मनोरथ हो जाती हैं। अतएव सभी जीवोंको यही हमारा अन्तिम उपदेश है कि मिथ्याभूत जगत्की आसक्तिको इसीके मननसे शीघ्र त्यागकर भगवान्में अनुरक्त हो जावें ॥२८॥४२॥

९

श्रीभगवानुवाच

इत्येतद्ब्रह्मणः पुत्रा आश्रुत्यात्मानुशासनम् ।
सनन्दनमथानर्चुः सिद्धा ज्ञात्वाऽऽत्मनो गतिम् ॥ ४३ ॥

भक्तरञ्जनी

कपित्थस्य यथा बीजं सर्वतो वै समावृतम् ॥ २ ॥ दशोत्तरेण पयसा मैत्रेयाण्डं च तद्वृतम् । स चाम्बुपरिधानोऽसौ वह्निना वेष्टितो बहिः ॥३॥ वह्निश्च वायुना वायुर्मैत्रेय नभसावृतः । भूतादिना नभः सोऽपि महता परिवेष्टितः ॥ ४ ॥ दशोत्तराण्यशेषाणि मैत्रेयैतानि सप्त वै । महान्तं च समावृत्य प्रधानं समवस्थितम् ॥ ५ ॥ अनन्तस्य न तस्यान्तः संस्थानं चापि विद्यते । तदनन्तमसंख्यातं प्रमाणं चापि वै यतः । हेतुभूतमशेषस्य प्रकृतिः सा परा मुने ॥ ६ ॥ इति ॥२८॥४२॥

## पद्यानुवादः

न ययुरीश तवान्तमजादयस्त्वमपि नैषि यतोऽण्डचयाः कणाः ।
ख इव रोमसु वान्ति वयं जगन्निरसने रसनेन तवाङ्गगाः ॥२८॥

इति इत्थम् ब्रह्मणः पुत्राः सनकादयः एतत् श्रुत्युक्तम् आत्मानुशासनम् जीवहितोपदेशं श्रीकृष्णसंबन्ध्युपदेशं वा आ सम्यक् श्रुत्वा अथ अतः अस्मादेव आत्मनः श्रीकृष्णस्य गतिं स्वरूपं च ज्ञात्वा सिद्धाः पूर्णमनोरथाः सन्तः सनन्दनमानर्चुः पूजयामासुः । यद्वा । आत्मनः श्रीकृष्णस्य अनुशासनं लीलोपदेशमेव आत्मनो जीवस्य गतिं निस्तारहेतुमाश्रुत्य उपपत्त्या ज्ञात्वा निश्चित्य च सिद्धाः सन्तः । यद्वा । आ सम्यक् श्रुतिभिः कृतं यदात्मानुशासनं तदेव गतिर्जीवस्य भगवत्प्राप्त्युपायस्तामेव ज्ञात्वा सनन्दनम् अथ श्रीकृष्णं च । इत्येतदिति नारदं प्रति नारायणवाक्यम् ॥ ४३ ॥

### भाषार्थ

श्रीनारायणने कहा कि हे नारद ! ब्रह्माके पुत्र सनकादिकोंने भगवान् श्रीकृष्णका प्रतिपादन करनेवाली इस वेदस्तुतिको सुनकर और उसीके मननसे भगवान्‌के स्वरूपको जानकर पूर्ण मनोरथ हो सनन्दनका पूजन किया ॥४३॥

इत्यशेषसमाम्नायपुराणोपनिषद्रसः ।
समुद्धृतः पूर्वजातैर्व्योमयानैर्महात्मभिः ॥ ४४ ॥

भक्तरञ्जनी

इति पूर्वजातैः सनकादिभिः अशेषसमाम्नायानां समस्तवेदानां पुराणानाम् उपनिषदां च रसः सारः समुद्धृतः तेषां सर्वेषामेव भगवद्भक्तिरसमयं तात्पर्यमित्युद्घाटितमित्यर्थः । कथंभूतैः महात्मभिः । महान् अत्युदारः आत्मा स्वभावः महति श्रीकृष्णे वा आत्मा चित्तं येषान्तैः । अत एव व्योमयानैः व्योम्ना आकाशेन यानं गमनं येषान्तैः । यद्वा । व्योम ब्रह्म तेन यानं विहारो येषां तैः । ब्रह्मपारङ्गतैर्वा इति सामर्थ्यं द्योतितम् । पुराणस्य वेदोपनिषदयोर्मध्यपातित्वेन न तेन विना तयोस्तात्पर्यावगतिरतस्तदालोडनमपि नितान्तमावश्यकम् । किञ्च 'ऋचो यजूंषि सामानि पुराणं यजुषा सह । उच्छिष्टाज्जज्ञिरे' इत्यथर्ववेदीयश्रुत्या वेदवत्पुराणस्याप्यपौरुषेयत्वं सुस्थिरमेव । यजुषेत्यप्रधाने तृतीयया च वेदापेक्षया पुराणस्य प्राधान्यमाधिक्यं च द्योतितम् । यथोक्तं नारदीये 'वेदार्थादधिकं मन्ये पुराणार्थं वरानने । वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः । पुराणमन्यथाकृत्वा तिर्यग्योनिमवाप्नुयात् । सुदान्तोऽपि सुशान्तोऽपि न गतिं क्वचिदाप्नुयात्' । स्कान्दप्रभासखण्डेऽपि— वेदवन्निश्चलं मन्ये पुराणार्थं द्विजोत्तमाः । वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः ॥ १ ॥ बिभेत्यल्पश्रुताद्वेदो मामयं चालयिष्यति । इतिहासपुराणैस्तु निश्चलोऽयं कृतः पुरा ॥ २ ॥ यन्न दृष्टं हि वेदेषु तद्दृष्टं स्मृतिषु द्विजाः । उभयोर्यन्न दृष्टं हि तत्पुराणैः प्रगीयते ॥ ३ ॥ यो वेद चतुरो वेदान् साङ्गोपनिषदो द्विजाः । पुराणं नैव जानाति न च स स्याद्विचक्षणः ॥ ४ ॥ इत्यलमतिविस्तरेण । 'समुद्धृतः इति' अर्थः स्थलत्रये गूढः पुराणोपनिषच्छ्रुतौ । सर्वतः सारमेतद्धि समुद्धृतमिहोच्यते, इति तद्विवरणम् ॥ ४४ ॥

भाषार्थ

हे नारद ! तुम्हारे पूर्वज आकाशमें विचरनेवाले दयालु-स्वभाव महात्माओंने यहं समस्त वेद पुराण और उपनिषदोंका सार ही निकालकर रख दिया है । अर्थात् इन सब शास्त्रोंका तात्पर्य भगवान् श्रीकृष्णमें है ऐसा निर्णय किया है ॥ ४४ ॥

त्वं चैतद् ब्रह्मदायाद श्रद्धयाऽऽत्मानुशासनम्
धारयंश्चर गां कामं कामानां भर्जनं नृणाम् ॥ ४५ ॥

श्रीशुक उवाच

एवं स ऋषिणाऽऽदिष्टं गृहीत्वा श्रद्धयात्मवान् ।
पूर्णः श्रुतधरो राजन्नाह वीरव्रतो मुनिः ॥ ४६ ॥

भक्तरञ्जनी

हे ब्रह्मदायाद ब्रह्मपुत्र नारद ! त्वं च त्वमपि एतत् वेदस्तुतिरूपम् आत्मानुशासनं श्रीकृष्णसम्बन्ध्युपदेशं श्रद्धया हृदि मुखे च धारयन् कामं यथेच्छं गां पृथ्वीं तदुपलक्षितान् लोकान् विचर । कीदृशमनुशासनम् । नृणां ये कामा नानावासनाः तेषां भर्जनं दाहकं निवर्तकमित्यर्थः । ब्रह्मणो दायं भागमत्तीति कर्मण्यण् । आदत्ते वा 'आतश्चोपसर्गे' इति कः । 'दायादौ सुतबान्धवौ' इत्यमरः । यद्वा । ब्रह्मैव श्रीकृष्णभक्तिरसमेव अयत्नप्राप्यदायमिव अत्ति सेवते इति ब्रह्मदायाद-शब्दो विवृतः ॥ ४५ ॥ हे राजन् ! एवम् ऋषिणा श्रीनारायणेनोपदिष्टं तत्त्वं श्रद्धया गृहीत्वा पूर्णः निवृत्तसंशयः सन् स नारद आह नारायणमिति शेषः । कथंभूतः । वीराणामिव जितेन्द्रियाणामिव व्रतं यस्य स वीरव्रतः वीरस्येव व्रतं प्रतिज्ञा यस्येति वा । नैष्ठिकब्रह्मचारित्वादविक्षिप्तचित्तः अत एव श्रुतधरः श्रवणमात्रेणैव शब्दतोऽर्थतश्च तद्धरतीति तथाभूतः । यतो मुनिर्मननशीलः । तत्कुतः । आत्मवान् भगवन्निष्ठश्च ॥ ४६ ॥

भाषार्थ

इसलिये हे ब्रह्मपुत्र नारद ! तुम भी इस आत्मानुशासनको हृदय और मुखमें धारणकर यथेच्छ लोकोंमें विचरो । यह वेदस्तव मनुष्योंकी समस्त वासनाओंको भूँजनेवाला है ॥ ४५ ॥ श्रीशुकदेवजी बोले—हे राजन् ! इस प्रकार ऋषि नारायणके द्वारा उपदिष्ट तत्त्वको श्रद्धासे ग्रहणकर आत्मज्ञानी नैष्ठिक ब्रह्मचारी मुनि नारद ( पूर्ण ) कृतकृत्य हो गए क्योंकि उन्होंने उस तत्त्वको श्रुतमात्रसे ही धारण कर लिया था बहुत उपदेशकी आवश्यकता नहीं पड़ी फिर वे नारायण से इस प्रकार बोले ॥४६॥

नारद उवाच

नमस्तस्मै भगवते कृष्णायामलकीर्तये ।
यो धत्ते सर्वभूतानामभवायोशतीः कलाः ॥ ४७ ॥
इत्याद्यमृषिमानम्य तच्छिष्यांश्च महात्मनः ।
ततोऽगादाश्रमं साक्षात्पितुर्द्वैपायनस्य मे ॥ ४८ ॥

---

भक्तरञ्जनी

यः सर्वभूतानां सर्वजीवानाम् अभवाय संसारनिवृत्तये उशतीः कमनीयाः कलाः मूर्तीर्धत्ते तस्मै कृष्णाय नम इत्यन्वयः। कथंभूताय। अमला निर्दोषा कीर्तिर्यस्य यतो भगवते पूर्णैश्वर्याय। कर्षति अरीनपि स्वपदं प्रतीति कृष्णः। यद्वा। स्वगुणैर्वात्सल्यादिभिः कर्षति वशीकरोति भक्तानिति कृष्णः। तन्नमस्कारेण कृष्णपरैवेयं वेदस्तुतिरिति निश्चीयते। अमला असुरेभ्योऽपि मोक्षप्रदत्वादविद्यामालिन्यनिवर्तिका कीर्तिर्यस्येति वा ॥ ४७ ॥ इति आद्यम् ऋषिं श्रीनारायणं, महात्मनः भगवन्निष्ठान् तच्छिष्यांश्च आनम्य ततो नारायणाश्रमात् मे साक्षात् पितुः द्वैपायनस्य श्रीव्यासस्य आश्रममगात् नारद इति शेषः। अग्निमथनावसरे कथञ्चिदरणिपतितस्य स्वरेतसो मथनादेव व्यासाच्छुको जातः तेन योनिव्यवधानं विनैव जनकत्वात् तस्य साक्षात्पितृत्वमुपपद्यते। ब्रह्मवैवर्ते तु श्रीशुकजन्मकथा प्रकारान्तरेणोक्ता। तथाहि-श्रीव्यासपत्न्या उदरे श्रीशुकः बहुकालं योगबलेन स्थितः पित्रा च मुहुर्मुहुः प्रार्थितोऽपि ततो न निर्गत उवाच च। हे भगवन्नहमितो न निर्गमिष्यामि निर्गते च मायाच्छन्नो भविष्यामीति कृष्णश्चेदत्रागत्यैवं कथयेत् नैवं स्यादिति तदैव निर्गमिष्यामीति तच्छ्रुत्वा व्यासेन द्वारकात आनीतः श्रीकृष्णस्तमुवाच वत्स! मा भैषीः शीघ्रं निर्गच्छ, तव माता दुःखिता मायालिप्तश्च न भविष्यसीति तच्छ्रुत्वा तत्क्षणान्निर्गत्य श्रीकृष्णं पितरौ च प्रणम्य

भाषार्थ

जो आप समस्त जीवोंके संसारनिवृत्तिके लिए सुन्दर अवतारोंको धारण करते हैं ? जिन आपके प्रसन्नतार्थ ही यह वेदों की स्तुति है। मैं भी पवित्र कीर्तिवाले भगवान् श्रीकृष्णके स्वरूप आपको नमस्कार करता हूँ ॥ ४७ ॥

सभाजितो भगवता कृतासनपरिग्रहः ।
तस्मै तद्वर्णयामास नारायणमुखाच्छ्रुतम् ॥ ४९ ॥

इत्येतद्वर्णितं राजन् यन्नः प्रश्नः कृतस्त्वया ।
यथा ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि श्रुतिश्चरेत् ॥ ५० ॥

---

भक्तरञ्जनी

संन्यस्य च वनं जगामेति, अतः कल्पान्तरमाश्रित्योभयमपि समञ्जसमेव न विरोधः । वस्तुतस्तु अरणिरिति नाम्ना प्रसिद्धा व्यासपत्न्येव अतः सर्वमनवद्यम् । अत्र पक्षे साक्षादित्यस्य स्वयं नारद इत्यर्थः । यद्वा । साक्षादाश्रमं बदरीषण्डमण्डितमित्यत्रान्वेति ॥ ४८ ॥ भगवता श्रीव्यासेन सभाजितः पूजितः कृतमासनस्य परिग्रहणं येन तथाभूतः स नारदः यत् श्रुतं श्रुतीनां साक्षाच्छ्रीकृष्णे पर्यवसानं तत्सर्वं तस्मै मत्पित्रे व्यासाय वर्णयामास । एतेन श्रीनारायणान्नारदस्ततो व्यासस्तस्मादहं मत्तश्च त्वं प्राप्तवानसीति गुरूपदेशपरम्परा सूचिता तयैव तत्त्वस्फूर्तिर्नान्यथेति ॥ ४९ ॥ उपसंहरति इतीति । हे राजन् ! नोऽस्मान्प्रति त्वया यत् यः प्रश्नः कृतः तत्र प्रश्ने एतदुत्तरं मया वर्णितम् । किमित्यपेक्षायामाह—यथा साक्षात् ब्रह्मणि बृहत्त्वगुणविशिष्टे श्रीकृष्णेऽपि श्रुतिश्चरेत् तत् प्रतिपादयेत् तथा वर्णितम् । कादृशे, वेदान्तिनामनिर्देश्ये तथा मननादित्यर्थः । भागवतमते तु अनन्तत्वेन साकल्येन निरूपणाशक्यत्वादनिर्देश्ये । यद्वा । अो वासुदेवस्तेन निर्देश्ये । निर्गुणे प्राकृतगुणरहिते च ॥५०॥

भाषार्थ

इस प्रकार नारदजी आदिऋषि श्रीनारायणको और भगवन्निष्ठ उनके शिष्योंको प्रणाम कर फिर वहाँसे साक्षात् मेरे पिता श्रीव्यासजीके आश्रममें गए ॥ ४८ ॥ वहाँ उन्होंने आसनको ग्रहण किया एवं भगवान् व्यासजीसे पूजित हो नारदजीने नारायणके मुखसे जो श्रुतियोंका निर्णय सुना था वह सबका सब उन्हें सुना दिया ॥ ४९ ॥ हे राजन् ! इस प्रकार जो तुमने प्रश्न किया था उसका उत्तर मैंने दे दिया कि निर्देशके अयोग्य निर्गुण ब्रह्ममें जिस प्रकार श्रुतियाँ उसके निरूपण करनेके लिये प्रवृत्त होती हैं ॥ ५० ॥

सम्प्रति बुद्धिदार्ढ्याय समस्तवेदस्तुत्यर्थं संक्षिप्य पुनरप्यनुस्मारयति य इति।

योऽस्योत्प्रेक्षक आदिमध्यनिधने योऽव्यक्तजीवेश्वरो
यः सृष्ट्वेदमनुप्रविश्य ऋषिणा चक्रे पुरः शास्ति ताः।
यं सम्पद्य जहात्यजामनुशयी सुप्तः कुलायं यथा
तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ॥५१॥

भक्तरञ्जनी

संक्षिप्तसार्थान्वयः। योऽस्य विश्वस्य आदिमध्यनिधने सृष्टिस्थितिप्रलये निमित्ते उत्प्रेक्षकः उत्कृष्टसङ्कल्पकर्त्ता 'तदैक्षत बहु स्याम्' इत्यादि श्रुतेः। यश्च अव्यक्तजीवेश्वरः प्रकृतिपुरुषयोर्नियन्ता। किञ्च यः ऋषिणा ब्रह्मणा सह इदं जगत् सृष्ट्वा अनुप्रविश्य च पुरः सर्वजीवशरीराणि चक्रे निर्ममे। पुनस्ताः सर्वाः पुरः शास्ति भोगं ददत्स्वयं पालयति। किञ्च सुप्तो जनः यथा कुलायं देहाभिमानं त्यजति तथा यं सम्पद्य अनुशयी भक्तिमान् जीवः अजामविद्यां जहाति तमभयं भयनिवर्तकं हरिमजस्रं ध्यायेत्। कथंभूतम्। कैवल्येन कैवल्यप्रापणेन निरस्ता दूरतः क्षिप्ता योनिरविद्यात्मिका संसृतिर्येन तं कैवल्यनिरस्तयोनिम्।

तं हरिम् अजस्रं निरन्तरं ध्यायेत्। तं कम्। यः अस्य सर्वस्य जगतः उत्प्रेक्षक ऊर्ध्वमुत्कृष्टं प्रेक्षते इत्युत्प्रेक्षकः कथमेते उद्धरणीया इत्युत्कृष्टविचारकः। कुतः। योऽस्य आदिमध्यावसाने वर्तमानः, तत्रादौ कारणत्वेन मध्ये आश्रयत्वेन अन्तेऽवधित्वेन च वर्तते इत्यर्थः। किञ्च यः अव्यक्तजीवेश्वरः। अव्यक्तं प्रकृतिः पुरुषश्च तयोरपि ईश्वरः नियन्ता। एतेन यः सर्वोद्धारकरत्वेन सर्वज्ञानदः यश्च सर्वकारणभूतः यश्च सर्वनियन्ता स एव ध्येय इत्येव श्रुतीनां निष्कर्षः। किञ्च यः इदं विश्वं चक्रे सृष्टवान् सृष्ट्वा च पुनः ऋषिणा अन्तर्यामिरूपेण इदं विश्वं स्थावरजङ्गमात्मकमनुप्रविश्य ताः पुरः शरीराणि शास्ति भोगं ददत्परिपालयति। यद्वा। यश्चेदं सूक्ष्मसमष्टिरूपं ब्रह्मशरीरं सृष्ट्वाऽनुप्रविश्य च ऋषिणा ब्रह्मणा द्वारभूतेन पुरो विविधशरीराणि स्थूलानि चक्रे पुनस्ताः शास्ति च। यद्वा। ऋषिणा ब्रह्मणा इदं सृष्ट्वा पुरः जीवस्य भोगायतनानि चक्रे स्वयमन्तर्यामिरूपेण चानुप्रविश्य ताः शास्ति च। किंच यं सम्पद्य प्राप्य अनुशयी जीवः अजामविद्यां जहाति

भक्तरञ्जनी

त्यजति संसारान्मुच्यते इत्यर्थः। अनु अनु पुनः पुनः दण्डवत्प्रणामैर्भगवत्तच्चरणमूले शेते इति अनुशयी भक्तिमान् जीवः। त्यागे दृष्टान्तः-यथा सुप्तः कुलायं स्थूलशरीरं जहाति सन्निहितमपि तन्न स्मरति तद्वत्। य एवंभूतस्तं ध्यायेदिति विधिः। 'निदिध्यासितव्यः' इति श्रुतेः। कथंभूतम्। कैवल्येन कैवल्यसाधनीभूतया भक्त्या नतु वेदान्तिनामिव ज्ञानाहङ्कारेण निरस्ता दूरीकृता योनिर्भक्तानामविद्या येन तम्। यद्वा। कैवल्येन शुद्धस्वरूपत्वेन हेतुना निरस्ता नित्यमेव दूरे क्षिप्ता योनिर्जगत्कारणं माया यस्मात्। यद्वा। कैवल्येन कैवल्यप्रापणेन निरस्ता योनिः योनिजं दुःखं संसारो वा येन। केचित्तु निरस्ता योनिः कारणं यस्य कारणशून्यः कैवल्यश्चासौ निरस्तयोनिश्चेति तम्। 'न तस्य कश्चित् जनिता न चाधिपः' केवलो निर्गुणश्च, इत्यादिश्रुतेरित्याहुः। अत एव अभयं मृत्युभयनिवर्तकम्। भक्तार्तिहरणशीलत्वाद् हरिरिति। अत्र अस्योत्प्रेक्षक इत्यादिना जगत्कारणत्वं योऽव्यक्तजीवेश्वर इत्यनेन परमेश्वरत्वं यः सृष्ट्वेत्यादिना स्वाभाविकदयालुत्वं यमित्यादिना भक्तवात्सल्यं हरिमिति परमसौन्दर्यादिना चित्ताकर्षकत्वं ध्यायेदिति लिङा मुख्यविधिना भगवत्प्राप्त्युपायश्च निदर्शितः। तेन च सर्वशास्त्रनिष्कर्षोऽप्येतावानेवेत्यपि ध्वनितम्। उक्तं च—'आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः। इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा'॥ इति। केचित्तु अत्राभिन्ननिमित्तोपादानकारणत्वप्रतिपादनेन समन्वयाध्यायाविरोधाध्यायार्थः संगृहीतः। अजस्रं ध्यायेदित्यनेन साधनाध्यायार्थः। जहात्यजामित्यनेन फलाध्यायार्थश्चेति सम्पूर्णा चतुरध्यायी ब्रह्ममीमांसा श्रीशुकेनैकस्मिन् श्लोके व्याख्याता इत्याहुः ॥५१॥

भाषार्थ

अत्र समस्त वेदस्तुतिके अर्थको संक्षेपसे श्रीशुकदेवजी एक ही श्लोकमें वर्णन करते हैं—जो इस विश्वके सृष्टि, उत्पत्ति और संहारके निमित्त संकल्प करनेवाले हैं एवं जो प्रकृति और पुरुषके नियन्ता हैं और जिन्होंने इस विश्वकी रचनाकर पुनः अन्तर्यामी रूपसे उसमें प्रविष्ट होकर ब्रह्माके द्वारा समस्त जीवोंका निर्माण किया एवं स्वयं उनका पालन करते हैं और जिनको प्राप्तकर भक्तिमान् जीव अविद्या को त्याग देता है। जैसे सोता हुआ प्राणी देहाभिमानको छोड़ देता है ऐसे अपने शुद्ध-स्वरूपसे मायाको निवृत्त करनेवाले भक्तभय-

इति वेदस्तुतेर्व्याख्या सर्वसन्देहभञ्जनी ।
कृता पौराणिकेनैषा भक्तिदा भक्तरञ्जनी ॥ १ ॥
वेदस्तुतिर्यथा क्लिष्टा तथैव सरलीकृता ।
यत्करग्रहलेखन्या तं नमामि गजाननम् ॥ २ ॥
काश्यां भागीरथीतीरे ललितासन्निधौ मया ।
कृतेयमद्भुता व्याख्या प्रीयतां तेन मे प्रियः ॥ ३ ॥
पठनतो मननादतिनिष्ठया प्रतिदिनं भगवत्यनुरागतः ।
श्रुतिगणेन निरूपितमद्भुतं द्रुतविलम्बिततत्त्वमिहाप्यते[1] ॥४॥
सततचिन्तननष्टभयाऽऽमया हरिदयाऽऽगतया सुधिया मया ।
इयमनन्तगले ग्रथिताऽर्पिताऽमुकुलिता स्रगिवाऽत्र विराजताम् ॥५॥

भाषार्थ

द्वारी उन भगवान् श्रीकृष्णका ही निरन्तर ध्यान करना चाहिए यही समस्त वेद, उपनिषद् और पुराणोंका निचोड़ है और कुछ नहीं ॥५१॥

इति श्रीसनाढ्यवंशावतंसश्रीराममूर्तिशास्त्रिपौराणिकविरचितायां दशमस्कन्धोत्तरार्द्धगतवेदस्तुतिव्याख्यायां भक्तरञ्जन्यां सप्ताशीतितमोऽध्यायः ॥८७॥

॥ समाप्तेयं वेदस्तुतिव्याख्या भक्तरञ्जनी ॥

१ द्रुतं गतं विलम्बितं विलम्बो यस्य एवंभूतं यत् तत्त्वं श्रीकृष्णतत्त्वम् ।

## काशिकराजकीयसंस्कृतमहाविद्यालयभूतपूर्वप्रधानाध्यक्षाणां दार्शनिकसार्वभौममहामहोपाध्याय पं० श्रीगोपीनाथ कविराज एम. ए. डि० लिट् महोदयानां

# सम्मतिः

श्रीमद्भागवतस्था वेदकृता ब्रह्मस्तुतिर्भक्तजनेषु विद्वत्सु च प्रसिद्धिमाप्तापि दुर्बोधा तत्त्वव्याकृतिपरां टीकामन्तरेण मन्दमतीनामनधिगम्याशयेति स्वामिपादैस्तदुपरि लघ्वक्षरा भावगम्भीरा काचिद् व्याख्या निर्मिता। सा तु तत्र तत्र चित्सुखादिकृतप्राचीनटीकानां सारभूतेत्यनुमीयते। स्वामिपादानां निजव्याख्यापि कुत्रचित् स्थलेष्वस्फुटतया स्पष्टीकरणार्हेति तत्रापि दीपिकादीपनादीनि व्याख्यानानि कानिचित् प्रवृत्तानि। साम्प्रतं वाराणसीवास्तव्येन पण्डितवरेण श्रीमता राममूर्तिशास्त्रिणा पौराणिकेन तत्र भक्तरञ्जनी नाम्ना काचिदभिनवरमणीया टीका संक्षिप्तसार्थान्वयसहिता भावार्थसमन्वितपद्यानुवादसहिता च सुकुमारधियां पाठकानां सुखबोधाय विरचिता। सेयं स्थालीपुलाकन्यायेन क्वचित् क्वचित् समालोकिता मया। स्तुत्यर्थनिरूपणमत्र सरलभाषया सुष्ठु संवृत्तमिति जिज्ञासुभक्तानां जिज्ञासाविनिवृत्तये प्रभूतमुपकरिष्यति। किञ्चेयं व्याख्या व्याख्याविकल्पानुगामित्वाद्वैष्णवानामद्वैतवेदान्तिनां चोभयेषामपि मानार्हा विद्वत्सु विद्यार्थिगोष्ठीषु भक्तसमाजेषु चास्या भूयान् प्रचारो भविष्यतीत्याशास्ते।

| | |
|---|---|
| सं० २०१० अधिकवैशाखशुक्लैकादश्यां भृगुवासरे | कविराजोपाधिकः श्रीगोपीनाथदेवशर्मा |

## काशिकराजकीयसंस्कृतमहाविद्यालयप्राध्यापकानां दर्शनादि-सकलसंस्कृतवाङ्मयपारङ्गतानां पण्डितप्रवरश्रीरघुनाथशास्त्रिणां

# सम्मतिः

श्रीमद्भागवतं परमपुरुषार्थमर्थयतां स्त्रीशूद्राणामपि सुकुमारमतीनामनायासेन च शास्त्रतदुपायानुसरणसंभावितस्वान्ततान्तित्रस्तानां भागवतानां कृते परमकारुणिकेन मुनिना बादरायणेनाभाणि इति वैयासकिविष्णुरातकथानुकथाभ्यामतिरोहितम्। अत्र चायं श्लोकः—'इत्थं निशम्य भृगुनन्दन साधुवादं वैयासकिः स भगवानथ विष्णुरातम्। प्रत्यर्च्य कृष्णचरितं कलिकल्मषघ्नं व्याहर्तुमारभत भागवतप्रधानः।'

तस्य च सारभूतेयं वेदस्तुतिः। यत्र सतां सात्वतां सतो ब्रह्मणः प्राप्त्युपायभूतः सद्भिर्वेदैर्विहितः सन् मार्गो भगवत्स्तुतिव्याजेनोपदिष्टः। तत्र ब्रह्मणो निर्गुणत्वेन शब्दागोचरत्वाद् वेदानां ब्रह्मपरत्वं न संभवति, इति प्रागाशङ्क्य प्राकृतगुणशून्यत्वेन दिव्यगुणवत्त्वेन, विध्यगोचरत्वेऽपि अतद्व्यावृत्तिमुखेन वा तत्त्वं संभवतीति वेदस्तुतितात्पर्यं मतभेदेन समर्थयन्ते वैष्णवाचार्या अद्वैतवेदान्तिनश्च।

तत्र प्रथमश्लोके सर्ववेदानां भगवत्परत्वं प्रतिज्ञातम्। द्वितीये तु इन्द्राग्न्यादिपदानां वैदिकानामन्यार्थपरत्वाशङ्कानिरसनमुखेन तेषां भगवत्परत्वं व्यवस्थाप्य प्रतिज्ञातार्थः साधितः। तृतीयेन तु सतां प्रवृत्त्या स एवार्थो द्रढीकृतः। सतां प्रवृत्तिश्च द्विधा भगवच्चरितकथाश्रवणादिरूपैका विशुद्धभगवद्धामानुध्यानरूपा चापरा। चतुर्थेन तु उभयविधसत्प्रवृत्तिरहितानामभक्तानां निन्दा, तथाऽपि स एवार्थो द्रढीकृतः। एवं श्लोकचतुष्केण वेदानां ब्रह्मपरत्वं समर्थ्य पञ्चमेन उदरहृदयाद्युपास्यस्थानानुपासनं तत्तच्छ्रुतिविहितमुक्तम्। ईश्वरस्यापि उदरहृदयाद्युपाधिसम्बन्धे जीवविशेषेणानुपास्यत्वमाशङ्क्य ईश्वरः सर्वव्यापितया एक उपाधिपरिच्छेदशून्यो बिम्बरूपः, जीवस्तु अन्तःकरणाद्युपाधिपरिच्छिन्नो नाना प्रतिबिम्बरूप इति प्रतिबिम्बेन जीवेन स्वबिम्बरूप ईश्वर उपास्य इति षष्ठेन समाहितम्। यदा भगवदंशस्य जीवस्यापि न स्वतः उपाधिसम्बन्धस्तदा कथं भगवतः स इति सप्तमस्याभिप्रायः। [illegible] साधनेषु प्रागुक्तेषु भक्तेः [illegible], नवमेन भक्तेः [illegible]। [illegible] ध्यानस्य भक्त्यङ्गत्वम्। एकादशेन भक्तिस्तुतिः। द्वादशेन [illegible] द्वारा श्रवणादिभक्तेरेव कर्तव्यत्वोपदेशः। [illegible]

काशिकराजकीयसंस्कृतमहाविद्यालयभूतपूर्वप्रधानाध्यक्षाणां
दार्शनिकसार्वभौममहामहोपाध्याय पं० श्रीगोपीनाथ
कविराज एम. ए. डि० लिट् महोदयानां

## सम्मतिः

श्रीमद्भागवतस्था वेदकृता ब्रह्मस्तुतिर्भक्तजनेषु विद्वत्सु च प्रसिद्धिमाप्तापि दुर्बोधा तत्त्वव्याकृतिपरां टीकामन्तरेण मन्दमतीनामनधिगम्याशयेति स्वामिपादैस्तदुपरि लघ्वक्षरा भावगम्भीरा काचिद् व्याख्या निर्मिता। सा तु तत्र तत्र चित्सुखादिकृतप्राचीनटीकानां सारभूतेत्यनुमीयते। स्वामिपादानां निजव्याख्यापि कुत्रचित् स्थलेष्वस्फुटतया स्पष्टीकरणार्हेति तत्रापि दीपिकादीपनादीनि व्याख्यानानि कानिचित् प्रवृत्तानि। साम्प्रतं वाराणसीवास्तव्येन पण्डितवरेण श्रीमता राममूर्तिशास्त्रिणा पौराणिकेन तत्र भक्तरञ्जनी नाम्ना काचिदभिनवरमणीया टीका संक्षिप्तसार्थान्वयसहिता भावार्थसमन्वितपद्यानुवादसहिता च सुकुमारधियां पाठकानां सुखबोधाय विरचिता। सेयं स्थालीपुलाकन्यायेन क्वचित् क्वचित् समालोकिता मया। स्तुत्यर्थनिरूपणमत्र सरलभाषया सुष्ठु संवृत्तमिति जिज्ञासुभक्तानां जिज्ञासाविनिवृत्तये प्रभूतमुपकरिष्यति। किञ्चेयं व्याख्या व्याख्याविकल्पानुगामित्वाद्वैष्णवानामद्वैतवेदान्तिनां चोभयेषामपि मानार्हा विद्वत्सु विद्यार्थिगोष्ठीषु भक्तसमाजेषु चास्या भूयान् प्रचारो भविष्यतीत्याशास्ते।

| | |
|---|---|
| सं० २०१० अधिकवैशाखशुक्लैकादश्यां भृगुवासरे | कविराजोपाधिकः श्रीगोपीनाथदेवशर्मा |

काशिकराजकीयसंस्कृतमहाविद्यालयप्राध्यापकानां
दर्शनादि-सकलसंस्कृतवाङ्मयपारङ्गतानां
पण्डितप्रवरश्रीरघुनाथशास्त्रिणां

# सम्मतिः

श्रीमद्भागवतं परमपुरुषार्थमर्थयतां स्त्रीशूद्राणामपि सुकुमारमतीनामनायासेन च शास्त्रतदुपायानुसरणसंभावितस्वान्ततान्तित्रस्तानां भागवतानां कृते परमकारुणिकेन मुनिना बादरायणेनाभाणि इति वैयासकिविष्णुरातकथानुकथाभ्यामतिरोहितम्। अत्र चायं श्लोकः—'इत्थं निशम्य भृगुनन्दन साधुवादं वैयासकिः स भगवानथ विष्णुरातम्। प्रत्यर्च्य कृष्णचरितं कलिकल्मषघ्नं व्याहर्तुमारभत भागवतप्रधानः।'

तस्य च सारभूतेयं वेदस्तुतिः। यत्र सतां सात्वतां सतो ब्रह्मणः प्राप्त्युपायभूतः सद्भिर्वेदैर्विहितः सन् मार्गो भगवत्स्तुतिव्याजेनोपदिष्टः। तत्र ब्रह्मणो निर्गुणत्वेन शब्दागोचरत्वाद् वेदानां ब्रह्मपरत्वं न संभवति, इति प्रागाशङ्क्य प्राकृतगुणशून्यत्वेन दिव्यगुणवत्त्वेन, विध्यगोचरत्वेऽपि अतद्व्यावृत्तिमुखेन वा तत्त्वं संभवतीति वेदस्तुतितात्पर्यं मतभेदेन समर्थयन्ते वैष्णवाचार्या अद्वैतवेदान्तिनश्च।

तत्र प्रथमश्लोके सर्ववेदानां भगवत्परत्वं प्रतिज्ञातम्। द्वितीये तु इन्द्राग्न्यादिपदानां वैदिकानामन्यार्थपरत्वाशङ्कानिरसनमुखेन तेषां भगवत्परत्वं व्यवस्थाप्य प्रतिज्ञातार्थः साधितः। तृतीयेन तु सतां प्रवृत्त्या स एवार्थो दृढीकृतः। सतां प्रवृत्तिस्तु द्विधा भगवच्चरितकथाश्रवणादिरूपैका विशुद्धभगवद्धामानुध्यानरूपा चापरा। चतुर्थेन तु उभयविधसत्प्रवृत्तिरहितानामभक्तानां निन्दा, तयाऽपि स एवार्थो दृढीकृतः। एवं श्लोकचतुष्केण वेदानां ब्रह्मपरत्वं समर्थ्य पञ्चमेन उदरहृदयाद्युपाध्यालम्बनमुपासनं तत्तच्छ्रुतिविहितमुक्तम्। ईश्वरस्यापि उदरहृदयाद्युपाधिसम्बन्धे जीवादविशेषेणानुपास्यत्वमाशङ्क्य ईश्वरः सर्वव्यापितया एक उपाधिपरिच्छेदशून्यो बिम्बरूपः, जीवस्तु अन्तःकरणाद्युपाधिपरिच्छिन्नो नाना प्रतिबिम्बरूप' इति प्रतिबिम्बेन जीवेन स्वबिम्बरूप ईश्वर उपास्य इति षष्ठेन समाहितम्। यदा भगवदंशस्य जीवस्यापि न वस्तुत उपाधिसम्बन्धस्तदा कथं भगवतः स इति सप्तमपद्याभिप्रायः। अष्टमेन भगवत्प्राप्तिसाधनेषु प्रागुक्तेषु भक्तेर्गुरुत्वम्, नवमेन भक्तिं विनाऽनर्थपरम्पराप्राप्तिः। दशमेन ध्यानस्य भक्त्यङ्गत्वम्। एकादशेन भक्तिस्तुतिः। द्वादशेन ज्ञानस्याशक्यत्वोपवर्णनद्वारा श्रवणादिभक्तेरेव कर्तव्यत्वोपदेशः। सद्रूपे भगवति जगज्जीवौ भ्रान्त्या

सद्वत् प्रतीयेते इति त्रयोदशनिष्कर्षः। श्रौतमात्मज्ञानन्तु अपरोक्षमपि असंभावनादिकवलितत्वात्परोक्षमिव भक्त्या भगवत्प्रसादलब्धन्तु अयत्नतो मोक्षसाधनसमर्थमिति भक्तिरेव गरीयसीति चतुर्दशपद्यभावार्थः। भगवतोऽखिलसत्त्वनिकेतत्वेऽपि न तत्करणसम्बन्ध इति न कर्तृत्वभोक्तृत्वादिप्रसक्तिरिति पञ्चदशपद्याभिसन्धिः। ईशः करणप्रवर्तको नरास्तु करणपरतन्त्रा इति आद्यस्य सेव्यत्वमित्यपि। नरा ईशादुत्पन्नत्वेन तत्परतन्त्रा इत्यत ईशस्य सेव्यत्वमिति षोडशतात्पर्यम्। आत्मनानात्वविभुत्वपक्षोऽवच्छेदपक्षश्च तर्कविरुद्धः श्रुतिविरुद्धश्चेति प्रतिपादनेनेशस्य नियन्तृत्वसमर्थनं सप्तदशेन। जीवानामोशोत्पन्नत्वमुपाधिद्वारा न स्वत इति न कोऽपि दोषगन्ध इत्यष्टादशभावार्थः।

यतो भगवदधीनो जीवानां जन्मकर्मलयरूपो भवोऽतस्तद्भक्तिसाध्यैव तन्निवृत्तिरिति एकोनविंशतात्पर्यम्। भक्तिस्तु गुरूपसदनसाध्यमनोनियमसाध्येति विंशाभिप्रायः। भवनिवृत्तौ वैराग्यं भक्तेरङ्गमिति एकविंशेन वर्णितम्, गुरूपदेशेनात्मतत्त्वावगमः श्रवणम्, तीर्थादिषु महत्सङ्गेनोपपत्तिभिस्तद्दृढीकरणं मननमिति द्वाविंशपद्यहृदयम्, त्रयोविंशेन प्रपञ्चसत्त्वसाधकाभावप्रदर्शनरूपमननस्वरूपनिरूपणम्। चतुर्विंशेन प्रपञ्चासत्त्वसाधकश्रुत्यादिप्रमाणोपन्यासेन मननमेव प्रदर्शितम्। प्रपञ्चासत्त्वेऽपि जीवस्याविद्याकृतः संसारो नेश्वरस्येति पञ्चविंशपद्यार्थः। भगवन्मार्गे प्रवृत्तानामपि अन्तर्विषयकामनासत्त्वे नेह सुखं प्रत्युत कुयोनिप्राप्तिरेवेति षड्विंशनिष्कर्षः। तत्त्वज्ञानिनां त्वत्प्रपत्तिमताञ्च न विधिनिषेधबाधः किन्तु योगच्छद्मनेन्द्रियार्थलालसानामेवेति सप्तविंशपद्यभावः। भगवतः स्वरूपस्य वाङ्मनसागोचरत्वेऽपि अतन्निरसनेन निषेधशेषतया श्रुतिगोचरत्वमिति अष्टाविंशपद्यार्थनिर्णयः। एष च श्रीधरानुगृहीतो मार्गः, एवं परस्परसम्बद्धोपादेयदुरूहार्थवर्गसंभृतिगभीरेयं वेदस्तुतिः इति सतीष्वपि चिरन्तनीषु व्याख्यासु कालेनाल्पमेधसामुपकारवैमुख्यमालोक्य श्रीभगवद्बादरायणपथानुगामिनैव श्रीराममूर्तिशास्त्रिणा सर्वार्थविद्योतिनी यथार्था भक्तरञ्जनीत्याख्या व्याख्या लोकानुपकरिष्यतीति मे दृढः सर्गः। सा चेयं स्थालीपुलाकन्यायेन यत्र क्वचनांशे समीक्षिताऽपि मनस्तोषमाधास्यत्येव ज्ञातवतां जिज्ञासूनाञ्चेतीदं सर्वार्थदर्शिनो मे सम्प्रधारणा।

यदनुग्रहसंप्राप्तसामग्रीसंभृतात्मना।
वेदस्तवो मया दृष्टः स मे तुष्यतु माधवः॥

रघुनाथशर्मणः
२।५।५२

पुस्तक प्राप्तिस्थानम्—

[ १ ] श्रीपौराणिक कार्यालय
१।६५ ललिताघाट काशी

[२ ] पं० श्रीनाथशास्त्री पुराणाचार्य
सप्ताहवाचस्पति
मकान नं० १३५ पुरानाशहर वृन्दावन